*December.* *1908.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 132.

# कात्यायनश्रौतसूत्रम् ।

## महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA ŚRAUTASÛTRA,

WITH A COMMENTARY BY ŚRÎ KARKÂCHÂRYA,

EDITED BY

VYÂKARANÂCHÂRYA PANDIT MADANAMOHAN PÂTHAKA

Professer of Mîmâmsâ and Dharmaśâstra,

Ranabir Sanskrit Pâthaśâlâ,

*Central Hindu College, Benares*

FASCICULUS XIII.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK DEPÔT

BENARES:

AGENTS OTTO HARRASSOWITZ, LEIPZIG.

PANDITA JYESHTHARÂMA MUKUNDAJI, BOMBAY.

PROBSTHAIN & CO, BOOKSELLERS, LONDON,

*Printed by Harikrishna Dâs, Proprietor,*

AT THE VIDYÂ-VILAS PRESS

BENARES

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम ॥ २ ॥

स्तबकः—१३२

## षड्विंशोऽध्यायः ।

इति षड्विंशोऽध्यायः ।

## शुल्बसूत्राणि

# भूमिका।

---

अथैतत् प्रस्तूयते याज्ञिकजनानां जीवातुरिव कर्काचार्यप्रणीतभाष्यसनाथं कात्यायनश्रौतसूत्रम्। एतस्य खलु रचयिता भगवान् कात्यायनमुनिः, भाष्यकारश्च सुगृहीतनामधेयः कर्काचार्यः। कात्यायनमहर्षिः कर्काचार्यो वा, कदा कश्च भुवो भागमलञ्चक्रतुरिति विशेषतो ऽनिश्चितमपि सूत्राक्षरविन्यासकौशलेन सूत्रकारस्य, यावदुपयुक्तव्याख्यानेन च भाष्यकारस्यापि प्राचीनत्वं ध्वन्यते। अस्मादपि प्राचीनं 'सम्प्रदाय'नाम्ना प्रसिद्धं भाष्यं वर्तते। अत एवात्र ग्रन्थे तत्र २ 'सम्प्रदाये तु' इत्याद्युट्टङ्कितं कर्काचार्यैः। तथा सत्यप्यस्यातिसूक्ष्मव्याख्यानरूपत्वात् सूत्रसादृश्यमेवावलोक्यत इति न तद्विषये विदुषां तादृशः समादरो यथास्मिन् भाष्य इति नाप्रसिद्धं मर्मज्ञानाम्।

अत्र च ग्रन्थे प्रथमाध्याये याज्ञिकसम्प्रदायप्रसिद्धानां परिभाषाणां निरूपणम्। द्वितीयतृतीययोश्च पौर्णमासयागदर्शयागयोर्निरूपणम्। चतुर्थे पिण्डपितृयज्ञाधानाग्निहोत्रादीनां पदार्थानां निरूपणम्। पञ्चमे चातुर्मास्यानां मित्रविन्देष्टेश्च निरूपणम्। षष्ठे पशुबन्धस्य। सप्तमादारभ्य दशमाध्यायसमाप्तिं यावत्सोमयागनिरूपणम्। एकादशे ब्रह्मत्वनिरूपणम्। द्वादशे द्वादशाहनिरूपणम्। त्रयोदशे गवामयननिरूपणम्। चतुर्दशे वाजपेयनिरूपणम्। पञ्चदशे राजसूयनिरूपणम्। षोडशसप्तदशाष्टादशेष्वध्यायेषु चयननिरूपणम्। एकोनविंशे सौत्रामणीनिरूपणमध्वर्युवेदविहितहौत्रनिरूपणं च। विंशेऽश्वमेधनिरूपणम्। एकविंशे पुरुषमेधपितृमेधयोर्निरूपणम्। द्वाविंशे एकाहानां तदवान्तरभेदानां श्येनादीनां च निरूपणम्। त्रयोविंशे अहीनानां निरूपणम्। चतुर्विंशे सत्राणां निरूपणम्। पञ्चविंशे प्रायश्चित्तानां निरूपणम्। षड्विंशे उपसत्प्रवर्ग्ययोर्निरूपणं कृतम्।

एतस्य ग्रन्थस्य शोधनकार्ये प्रवृत्तेन मया, पाठकोपनामकश्रीदुर्गाठक्कुरयाज्ञिकसङ्गृहीतमेकमतिप्राचीनं भाष्यपुस्तकं, द्वितीयं च

व्याकरणाचार्यपर्वतीयश्रीनित्यानन्दपण्डितसङ्कलितं पुस्तकं चेति पु-
स्तकद्वयमवलम्ब्यैव सर्वं कार्यमसमापि । तथा जर्मणदेशमुद्रितं
याज्ञिकदेवभाष्यं च सहायार्थं स्थापितम् । प्रायः क्लिष्टस्थलेषूपयुक्ता-
ष्टिप्पणीश्चाधो भागे स्थापिताः । पाठभेदाश्च सर्वासां प्रतीनामैक्यान्न
कृताः । कात्यायनमुनिप्रणीतशुल्बसूत्राणां कर्काचार्यप्रणीतं भाष्यं
चान्ते योजितम् । एवं यथामति शोधितेऽप्यमुष्मिन्ग्रन्थे मदीयम-
तिदोषेण सीसकाक्षरयोजकदोषेण चोपनतानि स्खलितानि शोधय-
न्तो विपश्चिद्वरा मयि सदया भवन्तु, भवतु चानेन व्यापारेण प्रीतो
यज्ञपतिर्भगवान्वासुदेव इति विरमामि वृथाविस्तरादितिशम्—

मदनमोहनपाठकः
काश्यां, गोघट्टवास्तव्यः

---

## प्रथमाद्यध्यायानामाद्यन्तसंख्याबोधनपत्रमिदम् ।

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

*Nos. 68, 69, 72, 74, 75, 76, 77, 78, 80, 83, 92, 98, 132.*

# कात्यायनश्रौतसूत्रम् ।

## महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA ŚRAUTASÛTRA,

WITH A COMMENTARY BY ŚRÎ KARKÂCHÂRYA;

EDITED BY

VYÂKARANÂCHÂRYA PANDIT MADANAMOHAN PÂTHAKA


Professor of Mîmâmsâ and Dharmaśâstra,

Ranabir Sanskrit Pâthaśâlâ,

*Central Hindu College, Benares.*



*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PAṆDITA JYESHṬHÂRÂMA MUKUNDAJÎ, BOMBAY.

PROBSTHAIN & CO., BOOKSELLERS, LONDON,

*Printed by Harikrishna Dâs, Proprietor,*

AT THE VIDYÂ-VILÂS PRESS.

BENARES.

---

1908

ओ३म्

श्रीगणेशायनमः।

# श्रौत्तभाष्य सङ्ग्रहः।

पूर्वां पौर्णमासीमुत्तरां वोपवसेत् ॥ १ ॥

ॐ यत्र संपूर्यते चन्द्रमसः पञ्चदशीकला।
सा पूर्वा पौर्णमास्युक्ता मुख्यैव श्रुतिलोकतः॥१॥
सैवापक्षीयते यत्र विधोः पञ्चदशीकला।
सोत्तरा पौर्णमासीति गौण्येषा प्रतिपच्छ्रुतेः ॥२॥

---

१ पूर्वा पौर्णमासी पञ्चदशी उत्तरा प्रतिपद् एतच्च श्रुत्या व्याख्यातम् । यथा एषाह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी यो त्तरे वोत्तमा या पूर्वेति । याउत्तरा फाल्गुनीपौर्णमासी प्रतिपद् एषो ह संवत्सरस्य प्रथमा रात्रिः । या पूर्वा पौर्णमासीः पञ्चदशी ए-वोत्तमापौर्णमासीस्यात् । एतदुभयत्रसूत्रकारो विकल्पेनोपवासमाह। तच्चैतद्वैकल्पिकविधानं व्यवस्थितम् । यथा कर्म्मप्रदीपे । सन्धिश्चे-त्सङ्गवादूर्ध्वं प्राक्पर्य्यावर्तनाद्रवेः । सापौर्णमासी विज्ञेया सद्यः कालविधौ तिथिः १ सङ्गवस्त्रिमुहूर्त्तात्मक प्रातः कालः । प्रातः कालोमुहूर्तांस्त्रीन् सङ्गवस्तावदेवतु इति दक्षोक्तः । सूर्य्य-स्य पश्चिमवर्त्तिन्याः छायायाः पूर्व दिग्वर्त्तित्वेन परि वृत्तिः पर्य्या वर्तनम् । स्थूलरीत्या पर्य्या वर्तनं मध्याह्नः । इदम्पर्य्यव-सितम् । त्रिमुहूर्तात्मक प्रातः कालादूर्ध्वं पर्वप्रति पदोः सन्धिर्यदा यद्वा मध्याह्नादर्वागपि यदा पर्वप्रतिपदोस्सन्धिस्तदैव यागः । अ-न्वाधानादि ब्राह्मण तर्पणान्तंकर्म्म । प्रतिपद्युपवासः पर्वं विधा-यां प्रतिपदिकर्तव्यः । नेतरत्र । प्रतिपद्येव याग विधानात् । अथ पर्व प्रतिपदोस्सन्धौकोपायमाह लौगाक्षी कात्यायनश्च यथा प्रतिपद्-श्चपदस्य पूर्वेद्यौ भागाः भागत्रयं कृत्वा पौर्णमास्या विपंज्य । सं-योज्य च सन्धेर्निर्णयः कार्य्यः।

उपवसेत्—

अग्न्यन्वाधानादि शयननियमान्तमनुतिष्ठेत् ॥ १ ॥

अग्न्यन्वाधानमध्वर्युर्यजमानो वा ॥ २ ॥

अग्न्यन्वाधानमिति कर्मणोनामधेयम् ॥ अग्न्यन्वाधानं होतृवेदविहितमितिकर्कः । अतोमन्त्रपाठउच्चैः । उच्चैरृचाक्रियतइतिश्रुतेः । अयथाकरणे च हौत्रिकं प्रायश्चित्तम् ॥ २ ॥

ममाग्ने वर्च्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतनाजयेमेत्याहवनीये समिधमादधाति ॥ ३ ॥

अग्न्यन्वाधाने षट् समिधोहस्ते गृहीत्वा स्फ्यश्च

---

यथा दिनमानं त्रिंशद्घटीमितम् ३० तर्हि मध्याह्नम् १५ घट्या भवितुमर्हति । अत्रोदाहरणं क्षये यथा पर्व १७ घटी प्रतिपद् १३ घटी अत्र चतसृणां क्षयघटीनामर्द्धं कृत्वा पर्वघट्या द्विघट्योर्वियोजितयोः पर्व पञ्चदशघटीमितमभूत । एवं पर्व १४ घटीमितम् प्रतिपद् १८ घटीमिता अत्र वृद्धघटीद्वयं पर्वणि संयोज्यम् तथा पर्व १६ घटिका एवमत्र यागोनकर्तव्यो मध्याह्नात्परं सन्धिः । यदि मध्याह्नात् सन्धिस्तदापि यागः कर्तव्यः । पूर्वाह्णे वाथमध्याह्ने यदिपर्वसमाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्यागइष्यते ॥ १ ॥ इति लौगाक्षिणोक्तेः । अपराह्णादिसन्धौ तु न यागः तत्रोपवासः परदिनेयागः । अपराह्णेथवारात्रावित्याद्युक्तेः ॥

पिण्डपितृयज्ञस्तु यदा अपराह्णे अमावास्या तदैव । यागस्तु तदुत्तरदिने एव । अपराह्णे मूलन्तु श्रुतिरेव तस्मै ह स्म पूर्वाह्णे देवाः अशनं मभिहरन्ति मध्यन्दिने मनुष्या अपराह्णे पितरः इति शत ५–२–१२ ।

पिण्डपितृयज्ञं कृत्वैव तत्परदिने एव याग इत्यसमानन्तु पूर्वेद्युः पितृभ्योनिक्रियं कृत्वा प्रातर्देवेभ्यः प्रतननमिति । पूर्वोक्तवाक्यस्वात् पिण्डपितृयज्ञ इति कात्यायनोक्तिश्च ॥

सव्यहस्ते धृत्वा ममाग्नइत्यादिपद्धतौ । सम्प्रदायेतु व-ज्रशिखः कुशोपग्रहः षट् समिधोगृहीत्वा अग्न्यन्वा-धानमिति ॥ देवयाज्ञिकमते स्फ्यस्य प्रोक्षणोत्तरमेव स्फ्येनोपग्रहः न प्राक् तथाच सम्प्रदाये वज्रं प्रोक्ष्य त-मेव गृहीत्वे त्यादि तमेवाह ममाग्नइति ॥

ऋत्विक्कर्तृकेऽपि कर्मणिफलं यजमानस्यैव यां वै ऋा-श्वयज्ञे ऋत्विजआशिषमाशास्ते यजमानस्यैवेति श्रुतेः ।

पालाश्यः समिधः कार्यास्तदभावेन्यवृक्षजाः ॥
समित्पवित्रं वेदश्च त्रयं प्रादेशसंमितं ॥ १ ॥
तिष्ठन्समिधः सर्वत्र इत्युक्तेः ॥ ३ ॥

एवमितरयोरग्न्योः ॥ ५ ॥

इतरयोर्गार्हपत्यदक्षिणाग्न्योः ॥ ५ ॥

महाव्याहृतिभिर्वा प्राक्संस्थम् ॥ ६ ॥

भूर्भुवः स्वस्तिस्रोमहाव्याहृतयः प्राक्संस्थं भूरि-तिगार्हपत्ये । भुवइति दक्षिणाग्नौ स्वरित्याहवनीये आदधामि इत्यध्याहारः प्रत्येकमिति कर्कः । नेतीतरे ॥ ६ ॥

तूष्णीं वा यथापूर्वम् ॥ ७ ॥

तूष्णींवेति । युगपद् द्वे द्वे गार्हपत्यदक्षिणाग्न्याहवनी-येषु यो यः पूर्वोयथापूर्वं येन क्रमेणाधानेउत्पन्नाः ॥ ७ ॥

अहनि मांसमैथुनं वर्जयेत ॥ ८ ॥

अग्न्यन्वाधानादिकर्मापवर्गान्तेकर्मणीत्यर्थः ॥ ८ ॥

केशश्मश्रु वपते वाऽशिखम् ॥ ९ ॥

पूर्वं श्मश्रु वपते ततः केशान् वा शब्दस्य वपतिना सम्बन्धः वपते न वा । यदा वपते तदा अशिखम् ।

भर्त्तृयज्ञास्तु वा ऽशिखमित्याहुः तन्मते वपनं नियमेन तच्च सशिखमशिखंवा ॥ ९ ॥

अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषा सुहितौ ॥ १० ॥

मध्याह्नात्परतइतिकर्कः त्रिधाभक्तापराह्णे इति भर्त्तृयज्ञाः । व्रतं भोजनं तत् उपेयते येन तद्व्रतोपायनीयममाषादि[1] । पत्नीयजमानावश्नीतः। सर्पिषा नियमेन घृतेन सहितम्। असुहितावतृप्तौ। एतच्च पौर्णमासे नदर्शे सवैपौर्णमासेनोपवसन्नसत्रासुहितइवस्यादितिश्रुतेः ॥ १० ॥

अन्तरेणापराग्नी गत्वा परेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणोप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वा ॥ ११ ॥

अपराग्नी गार्हपत्यदक्षिणाग्नी तयोः ॥ प्राङिति प्रवासे पिप्राप्नुवता यथास्यादिति ॥ ११ ॥

---

१ न माषः अमाषः स आदिर्यस्य तथोक्तः नीवारादि स वा आरण्यमेवाश्नीया दिति श्रुतेः अत्रश्रुता वेवकारयुक्त विधिवाक्यादेतरद्भक्ष्यम किन्तु आरण्यायोषधीः आरण्यवृक्षजान् अश्नीयात् एतेन कृष्टसंभोत्पन्नहैमन्तिकादि नायातम यत्तु आरण्योषधीनामश्नीयाद्वातिसूत्रे कर्केनोक्तम् इदमवसरप्राप्तं सायाह्नानमुच्यते तत्सूत्रेऽनुक्तम श्रुतौतु अशनानशने सामान्यनोक्तं नतु रात्रि प्रकरणे । किन्तु श्रुतौ सूत्रं च रात्रिप्रकरणमितउत्तरत आरब्धम् । किञ्चात्रैव वाक्योस्य कर्कोः स्फुवेः माषपाकव्यवहारं निराकर्तुं प्रवृत्तेन याज्ञवल्क्येन ऋषिणा ग्रामीधान्यानिषिद्धं व्रीहि यवाद्यपि। किञ्चातः यदि रात्रिविषयमा रण्याशनं विहितञ्चेत्तर्हि कर्कोमाषव्यवहारोदाहरणन्तत्खण्डनञ्च न सङ्गच्छेते । आरण्य ग्रहणं दर्शपौर्णमासहविर्व्यतिरिक्तो पलक्षणम् इत्यत्रभाष्ये सायणः ।

सत्यवाग्व्रतः ॥ १२ ॥

व्रतोपायनादुत्तरे काले यत्सत्यवदनन्तत्कर्माङ्गम् ॥ १३ ॥

वृक्षारण्यौषधीनामश्नीयाद्वा ॥ १४ ॥

आरण्यवृक्षाणाम् आरण्यौषधीनामितिकर्कः व्रतग्रहणे कृते आरण्याशनशय्यादिनियमोनेतरथेति हरिस्वामिनः ॥ १४ ॥

सद्यो वा प्रातः ॥ १६ ॥

प्रातः प्रतिपदि सद्योवा यागं कुर्यात् ॥ अशनातिरिक्तः सर्वोपिन्नियमः सम्भवति । वेदत्रयोक्तं प्रायश्चित्तम् ॥ १६ ॥

अग्निहोत्रं हुत्वा ब्रह्माणं वृणीते ब्रह्मिष्ठं भूपते
भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा
वृणीमह इति ॥ १७ ॥

कर्मयोगादिति सब्रह्मिष्ठशब्देनोच्यते ॥ १७ ॥

वृतो जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं
तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे
त्रिष्टुब् जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्प्रजापतये
प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां
ब्रह्माहं मनुष्याणाम् ॥ १८ ॥

स्वशाखोक्तानां सौत्रोक्तजपमन्त्राणां ऐश्वर्य

मेव शाखान्तरीयाणांतु तथा मन्त्राणां तानस्वरएव परिशिष्टानां त्रैस्वर्येणाध्ययनाभावात् ॥ १८ ॥

वाचस्पते यज्ञं गोपायेत्याह ॥ १९ ॥

वाचस्पते यज्ञं गोपायेति ब्रह्मैवाहेति भर्तृयज्ञ पितृभूति गर्गाचार्य श्रीअनन्त शङ्कर देवयाज्ञिकादयः। जपादि एतद्ब्रह्मत्वनिर्देशात् । सम्प्रदाय कर्कादयस्तु सामर्थ्याद्यजमानइत्याहुः ॥ १९ ॥

ब्रह्मसदनात्तृणं निरस्यति निरस्तः पाप्मा सह तेन यं द्विष्म इति ॥ २२ ॥

तृणान्येव ब्रह्मसदनादीन्यासनानीति भर्तृयज्ञ शङ्करादयः। कुशोत्तराणि पीठानीति कर्कादयः। एतत् तृणनिरसनोत्तरमपामुपस्पर्शनमिति श्रीअनन्त शङ्करौ। नेति कर्क देवादयः ॥ २२ ॥

इति प्रथमा कण्डिका।

वाग्यत आनुयाजप्रसवात् ॥ ३ ॥

स वै वाचंयम एव स्यात् ब्रह्मन् प्रस्थास्यामीत्येतस्माद्वचसइतिश्रुतेः ॥ एतदन्तमेव वाग्यमनम् नतु एतन्त इति समिदामन्त्रितः प्रसौतीत्येतदन्तम्। तेनात्र आङ् मर्यादायामेव नाभिविधौ ॥ ३ ॥

भागपरिहरणादि वा ॥ ४ ॥

उपवेशनादिवाग्यमने प्राप्ते भागपरिहरणाद्येव। वा शब्दः पञ्चम्यावृत्तौ ॥ ४ ॥

आवृता ऽवषट्कारासु ॥ ५ ॥

अवषट्कारास्वाहुतिषु पूर्णाहुतियूपाहुति सा
वित्र्याद्याज्याहुतिषु । आवृता ब्रह्मा आवृता म
न्त्ररहितक्रियया वृत उपवेशनान्तं कर्म कुर्यात् । वृ
तश्चेदमन्त्रत आसनसंस्कारं कृत्वा उपविशेदिति भ
र्तृयज्ञ पितृभूति गर्ग श्रीअनंत शङ्कर देवादयः । क
र्कादयस्तु आवृतेति सूत्रं दर्शपूर्णमासयोः प्राक् ब्रह्म
वरणापकर्षमित्याहुः । अनन्त याज्ञिकास्तु आवृतेत्य
नेनैव दर्वीहोमेषु सकलब्रह्मत्वसिद्धिर्नातिदेशेन । त
त्रप्रसवस्त्वीक्षणादिना कर्तव्यंइत्याहुः ॥ ५ ॥

व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥ ७ ॥

अथ यद्यार्चंयमोव्याहरतीतिप्रकृत्य वैष्णवीमृच
मित्यादिश्रुतत्वादिति प्रायश्चित्तम्। प्रमादाल्लौकिकगी
र्वाणरामकृष्णादिवाचं व्याहरेत् तदैव दर्शपौर्णमास
प्रकरणपठितत्वात्। उरुविष्णविति मन्त्रजपः। प्रथमो
पस्थितत्वादिति भर्तृयज्ञादयः । इदंविष्णुरिति मा
धवः। संस्कृतोच्चारणे न प्रायश्चित्तमित्यनन्तः॥७॥

एवमामन्त्रित ॐकारेण प्रोक्ष यज्ञामिति हवि
षीध्माबर्हिषाश्च ॥ १० ॥

एवमामन्त्रितो यथा ब्रह्मन्नपः प्रणेष्यामीति प्रणी
ताप्रणयने आमन्त्रणं विहितम् ॥ एवमनेनैव प्रकारेण
हविः प्रोक्षणे वर्हिःप्रोच्चणे पूर्वपरिग्रहे उत्तरपरिग्रहे
सामिधेन्यनुवचनेच । आमन्त्रितः पृष्टः ॐ कारेणप्र
सौति ॐकारपूर्वकेण अर्थसरूपेण वचसा प्रसौतीत्य
नुज्ञां प्रयच्छेत् । अत्रकर्कः ॐप्रणयेत्यस्य प्रसवार्थत्वात्

न्तःपुरस्ताज्जपः प्रयोजनमुपांशुप्रयोगइति । अत्रान-
न्तः यथोपांशु आव्ययतोः सन्धिसम्भवः तस्मा-
द्यजमानं च धेहीत्येतदन्तं पृथक् पूर्वमुक्त्वा पश्चादोंप्र-
णयेत्युच्चैरिति काण्वानामाम्नातम् ॥ १० ॥

पृथिव्यास्त्वेतिसादयत्यपोह्य बर्हींषि ॥ १६ ॥

पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ-
इति भर्तृयज्ञः ॥ १६ ॥

पुनरादाय देवस्यत्वेत्यनाभिकाङ्गुष्ठाभ्याममग्नेष्ट्वेति
प्राश्नाति दन्तैरनुपस्पृशन्नत्र चेत् ॥ १७ ॥

पुनरादाय देवस्यत्वेति यः काण्वानां पठितआ
ददइत्यन्तइतिपितृभूतिः ॥ पुनरादानं च द्रव्यमा-
त्रस्य प्राशनार्थत्वात् ततश्चासादनपक्षेपि प्रवर्तत-
एव। चेच्छब्दोवाशब्दार्थे। अत्र वा प्राश्नाति ॥ १७ ॥

निदधाति वांसदेशे ॥ १८ ॥

अथोपरिष्टात् ततः पूर्वमविशेषेणाभिहितम् अं,
सदेशविशेषेणाभिहितम् अंसदेशविशेषार्थमत्र पुनर्व-
चनमितिकर्कः अत्र कर्णयोः प्राशित्रहरणे प्रतिपत्तौ
द्वित्वश्रवणात् एकस्मिन्पात्रेऽवदेयं अपरेणापिधानं
तयोर्द्वयोः प्राशित्रहरणपात्रयोः ॥ १८ ॥

प्रक्षाल्य पात्रं नाभिमालभते या अप्स्वन्तर्देवतास्ता इद-
ं शमयन्तु स्वाहा कृतं जठरमिन्द्रस्य गच्छ घसिना
मे मासं पृक्था ऊर्द्ध्वं मे नाभेः सीदेन्द्रस्य
त्वा जठरे सादयामीति ॥ १९ ॥

प्रक्षालनं कार्यमिति सर्वयाज्ञिकसिद्धान्तः ॥ अ नभ्यबह्वृचछन्दोगानां दक्षिणे कर्णेप्राशित्रहरणं ललाटे प्राशित्रहरणमिति प्रतिपत्तौ एकस्यश्रवणात् एकमेव प्राशित्रहरणमिति । प्रक्षालनं चोत्करे कार्यम् । उत्क-रो वा अतिरिक्तस्य प्रतिष्ठेत्युक्तत्वादिति देवः ॥४१॥

एतं त इति समिदामन्त्रितः प्रसौति ॥ ४२ ॥

समिधमादायाह ब्रह्मन्प्रस्थास्यामीति समिदाम न्त्रणम् ॥ ४२ ॥

कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा नमः कृताय कर्मणे अकृताय कर्मणे नमः अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य सन्व॑न् सनि॑ सुविमुचाविमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहेति यथेतमेत्य ॥ ४४ ॥

कर्मापवर्गे कर्मसमाप्तौ समिधमादधाति समि-दाधानोपस्थानपक्षयोः स्वाहाकारान्तएव ॥ यथेतमेत्य यथाइतंतथाएत्य ॥ ४४ ॥

इति द्वितीयकण्डिका ।

गार्हपत्यमुत्तरेणोदपात्रं निधायालभते भूतस्त्वा भूतकरिष्यामीति ॥ १ ॥

उदपात्रं प्रणीताप्रणयनं चमसं सव्यहस्तेन गृही-त्वा दक्षिणेनापः पूरयित्वा निधायालभते ।पात्रमिति-कर्कः । उदकमिति गर्गाद्याः । चमसेनापः प्रणयन्ती-ति श्रुतेः । अकामस्य वानस्पत्येनैव ॥ १ ॥

अनुज्ञातउत्तरेणाऽऽहवनीयꣳ सम्प्रतिनिदधाति कस्त्वेति ॥ ३ ॥

सम्प्रति नातिसमीपे नातिदूरे वहिर्वेदीतियावत् ॥ शाखान्तरसूत्राद्दर्भेषु निधाय दर्भैः प्रच्छादयेदिति देवादयः ॥ एता प्रणीता अदृष्टार्थाः इति भर्तृयज्ञ गर्गादयः। संयवनार्था इति मीमांसकाः। सर्वार्था इति कर्कादयः। युक्तश्चैतत्

सर्वार्थत्वं प्रणीतानां देवभाष्ये प्रपञ्चितम्।
प्रणीताद्युपसत्सूत्रे सूत्रन्यायानुसारतः ॥ १ ॥
तथाश्री पितृभूत्यार्यैः सर्वार्थत्वं सुनिश्चितम् २ ॥ ३ ॥

तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं द्विशः पात्राणि सꣳ सादयति ॥ ८ ॥

तृणैः कुशैरग्नीन् यागक्रमेणाहवनीयगार्हपत्यदक्षिणाग्नीन् प्रागादिक्रमेण प्रादक्षिण्येन। शाखान्तरात् पुरस्तात्पश्चादुदग्रैः दक्षिणोत्तरयोः प्रागग्रैरिति देवः ॥ सर्वत्र प्रागग्रैरेवेति कर्कानुगाः ॥

परिस्तरणोत्तरं हस्तस्य तथैवाप्रदक्षिणावर्त्तनम्।
विवृत्यावृत्यवेतरथावृत्तिरित्युक्तेः ॥

द्विशः द्वे द्वे एकीकृत्य ॥ काण्वानां अग्निहोत्रहवणीशूर्पञ्चेतिपठ्यते ॥ ६ ॥

कर्म्मणे वामिति शूर्पाग्निहोत्रहवण्यादाय वाचं यच्छति ॥ १० ॥

कर्मणेवामितिमन्त्रे कर्मणे आददे इत्यध्याहारः। अयं मन्त्र उभयार्थः तयोरन्यतरस्य आदानविस्मरणे

लस्य मन्त्रपदादानम् आयातं निर्वापार्थम् ॥ वाग्य-
मनं सकलपदार्थाङ्गम् ॥ उभयोर्भेदेन मन्त्रावृत्त्या-
प्रतपनम् ॥ १० ॥

गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनस्तिष्ठ
त्समङ्क्ति ॥ १२ ॥

समङ्क्ति युगयोत्कार्चगैः सहवर्त्तमानम् ॥ १२ ॥

धूरसीति धूरभिमर्शनम् ॥ १३ ॥

धुरभिमर्शनं प्रथमं दक्षिणस्य ततउत्तरस्य संस्का-
रत्वाविशेषात् उदक्संस्थापत्तेश्च ॥ एकस्याएवाभि-
मर्शनमितिकेचित् । तन्नेति कर्कः । देवभाष्येतु सोप-
पत्तिकं द्वयोरभिमर्शनमभिधाय शाखान्तरसूत्रानु-
सारादेकस्याएव अभिमर्शनमित्युक्तम् ॥ पद्धतौ च
एकस्याएवेति ॥ १३ ॥

देवानामित्युपस्तम्भनस्य पश्चादीषाम् ॥ १४ ॥

ईषामालभ्यजपति । अथ जघनेन कस्तम्भीमीषाम-
भिमृश्य जपतीतिश्रुतेः जपत्वात् स्वरेण । अत्र देवश-
ब्दस्य विकृतौ लिङ्गवचनयोर्यथार्थमूहः । देवस्यासि दे-
वयोरसि देव्याअसी त्याद्यूहतीति कर्का नन्तौ । ने-
त्यपरे । प्रकृतौ तु साम्नाय्ये केवलम् । आग्नेयेपि दे-
वानामित्येव न प्रकृतावपूर्वत्वादित्युक्तेः ॥ १४ ॥

विष्णुस्त्वेत्यारोहणम् ॥ १५ ॥

दक्षिण चक्रारोहणं शाखान्तराच्च ॥ १५ ॥

प्रेक्षत उरुवातायेति हविष्यान् ॥ १६ ॥

नाना बीजे प्रतिबीजं समन्त्रकं प्रेक्षणम् ॥ उरुवातायेत्यतः प्रेक्षत इति काऐव । उरुवाताय भव इत्याध्याहार इति कर्कः ॥ १६ ॥

अपहृतमिति निरस्यत्यन्यत् ॥ १७ ॥

अन्यत् हविष्यव्यतिरिक्तं तृणकाष्ठादि निरस्यति नाना बीजेष्टौ तन्त्रेण ॥ १७ ॥

अविद्यमाने ऽभिमृशेत् ॥ १८ ॥

अभिमर्शनं तु भेदेन । अन्यस्य अविद्यमाने अभिमर्शनम् । मन्त्रलिङ्गवाक्यशेषाभ्याम्पञ्चभिरंगुलीभिरित्यनन्तः । अपिधानान्नेतिकर्कः ॥ १८ ॥

यच्छन्तामित्यालभते ॥ १९ ॥

आलम्भनमपि नानाबीजे भेदेन ॥ १९ ॥

देवस्यत्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन् ॥ २० ॥

देवस्यत्वेति मन्त्रान्ते अग्निहोत्रहवण्यां निर्वपन्ति ॥ ग्रहणे नैव मन्त्रोयं निर्वापे कर्कभाष्यतः । मुष्टिरध्वर्युसंस्कान्व स्वामिनोनक्रियां गतः ॥ १ ॥

चतुर्मुष्टिकनिर्वापं कृत्वा शूर्पे हविः क्षिपेत् ॥ देवयाज्ञिकसंलेखात् पितृभूतेर्मतात्पुनः ॥ २ ॥

अग्निहोत्रहवण्यां गृहीत्वा शूर्पे प्रक्षेप्तव्यमिति ॥ एकमन्त्रे क्रियावृत्तौ सकृन्मन्त्र इति स्थिते ग्रहणास्तरणाज्येषु नतु मन्त्रः सकृद्भवेत् ॥ ३ ॥ क्रियावृत्तौ पुनर्मन्त्रसाध्यसाधनभेदतः वचनाद्वुत्तमेमुष्टौमन्त्रोनेतीरितम्पुरा ॥ ४ ॥ तेनत्रिर्मन्त्रतो ग्राह्यं तूष्णीं ग्राह्यं

चतुर्थकम् ॥ स्रुतुल्यान्यां पदार्थानां समवायेनयाक्रमे साधिते प्रोच्यते नैककर्मणीति प्रबन्धतः ॥ ५ ॥ चतुर्मुष्टिकनिर्वापं कृत्वान्यस्य तु निर्वपेत् देवतामनतिक्रम्य तद्यथादैवतं स्मृतम् ॥ ६ ॥ ऐन्द्राग्न्य र्थोय मारम्भः कर्काचार्यमते पुनः वीप्सायामव्ययीभावो वीप्सा तु बहुयोगिनी ॥ ७ ॥ नैन्द्राग्निकेवलेयायादवते इति विग्रहः ॥ स्यातांसारस्वतौ यागौ प्राकृतौ वदसाधमौ ॥ ८ ॥ तदङ्गीकारतोनङ्गीकारेत्वभ्युदिते युजौ । देवतानां बहुत्वात् तत्कर्म प्राकृतमीरितम् ॥ ९ ॥ शेषाभिमर्शनं शेषिसंस्कारार्थं भवेत्ततः । सति शेषे भवेदेवादशेषग्रहणे कृते ॥ १० ॥ शेषाभावान्नसंस्कारोलुप्यतेतद्वशास्त्रतः । अयथाकरणं जातं तेन नैमित्तिकं भवेत् ॥ ११ ॥ शेषाभावान्नसंस्कारस्तदङ्गं नेति केचन ॥ शेषाभिमर्शनं कृत्वा शेषिद्रव्ये तु तत्क्षिपेत् ॥ १२ ॥ इति श्रीमदनन्तेन स्वभाष्ये व्याकृतं भृशम् ॥ प्राप्तक्षणं अनौ पक्षेभाष्यकारादिसम्मतात् ॥ १३ ॥

पात्रीपक्षे अनस्थाने इडापात्रीतोऽन्यामासादयेदिति गर्गादयः ॥ इडापात्र्येकैवेति कर्कादयः ॥ तत्र पात्रासादनानन्तरं सहविषां पात्रीं गार्हपत्यस्य पश्चान्निधायाधस्तात्प्रागग्रमुदग्रंवा स्फ्यं प्रेरयेत् ॥

ततः शूर्पाग्निहोत्रहवण्योरादानादि ॥ स्फ्य स्रुतर्धस्तादुपोह्य गृह्णीयादिति श्रुतेरिति श्रीअनं त देवौ ॥

पात्र्यां वा स्फ्योपिहितायाम् ॥ २७ ॥

पात्रीपक्षे स्फ्यो पहितायामौपधं कृत्वा शूर्पादानादीति सम्प्रदायः ॥ २७ ॥

धूरीषारोहणानि पात्रीबिले जपति ॥ २८ ॥

बिले पात्रीपूर्वार्द्धे इति देवः । बिलं बुध्नं घृतमित्यनन्तः ॥ २८ ॥

कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति ॥ ३० ॥

समावप्रशीर्णाग्रौ अत्रुटिताग्रौ नविद्यतेअन्तर्गर्भौ ययोस्तौ ॥ श्रीन्वेति मन्त्रे छेदनमन्त्रोन प्रवर्त्तते अनभिधायित्वादिति पितृभूतिः ॥ प्रकृत्यर्थस्य प्रधानत्वा द्वचनस्य गुणभूतत्वात्प्रवर्त्ततएवेति कर्कः ॥ ३० ॥

हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति ॥ ३२ ॥

ताभ्यां पवित्राभ्याम् ॥ ३२ ॥

तास्थानं तयोः ॥ ३३ ॥

ताः प्रोक्षण्यः तयोः पवित्रयोः स्थानं ॥ ३३ ॥

प्रोक्षितास्थेति तासां प्रोक्षणम् ॥ ३४ ॥

ताभिरेवतासां प्रोक्षणमिति सम्प्रदायः। यदि च तासां कर्मत्वं करणत्वं च विरुध्येत ततः प्रणीतेन भविष्यतीति कर्कः। मन्त्रपाठमात्रमिति केचित् ॥ ३४ ॥

कृत्वा दक्षिणेनो॥

इति ॥ ३५ ॥

सव्यहस्तस्थाएव सपात्राः प्रोक्षणीर्दक्षिणहस्तेनोर्ध्वं नयतीति कर्कदेवौ। दक्षिणेनोर्ध्वं चालयति पवित्राभ्यामिति श्रीअनन्तः॥ ३८॥

पात्राणि दैव्यायेति॥ ३८॥

कूटीकृत्य प्रोक्षणमिति गर्गः। प्रति पात्रप्रोक्षणमिति कर्कः॥ युक्तश्चैतत्॥ ३८॥

असञ्चरे प्रोक्षणीं निधाय॥ ३९॥

सचायमसञ्चरः प्राकृतः प्रणीताहवनीययोर्मध्ये॥

इति तृतीयाकण्डिका समाप्ता।

---

शर्म्मासीति कृष्णाजिनादानम्॥ १॥

पात्रेभ्यः कृष्णाजिनमपनीयेति कर्कः॥ पात्राण्यध्वर्युरतिक्रम्येतिदेवादयः॥ १॥

अपेत्यपात्रेभ्योव धूनोत्यवधूतमिति॥ २॥

प्रदानादुत्तरं यस्मादादानं दृश्यते ध्रुवम्। तेन दातव्यमग्नीधात् कृष्णाजिनमिदं तथा॥ २॥

। इति श्रीअनन्तः।

प्रत्यग्रीवमास्तृणात्यदित्यास्त्वगिति॥ ३॥

चर्माण्युत्तरलोमानीति परिभाषायामुक्तं तदपवादोयं प्रत्यग्रीवमेवेति॥ कृष्णाजिनादानम् अवघातार्थम्। अतश्च तदभावे ऽभावः। कृष्णाजिनास्तरणं तु आसादितहविःपात्रस्योत्तरतएव भवति। वेदिमध्यएवेत्यनन्तः॥ ३॥

सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा ॥४॥

अथोलुखलं प्रतिगृह्णात्यग्निरसीति काण्वानां पठ्यते ॥ ४ ॥

हविरावपत्यग्नेस्तनुरिति ॥ ५ ॥

हविरावपति हस्तेनैव शूर्पेण ।

अग्निशब्दआहवनीयपरः । तेनदार्षेतावभृतेऽपांस्तनूरितिप्रयोगः ॥ ५ ॥

सइदमित्यवदधाति ॥ १२ ॥

उलूखलस्थे हविषि सइदमित्यवदधाति ॥ १२ ॥

हविष्कृदेहीति त्रिराह्वयति ॥ १३ ॥

हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीतिश्रुतेरवहननं कुर्वतआह्वानं कार्यम् ॥ १३ ॥

अतः पत्न्यवहन्त्यन्योवा ॥ १४ ॥

अतः परं पत्न्यवहन्त्यन्योवा ॥ १४ ॥

आह्वयत्याहन्त्यन्योदृषदुपले कुक्कुटोसीति त्रिः

शम्ययाद्रिर्द्दृदं सकृदुपलाम् ॥ १५ ॥

आह्वयत्याहन्त्यन्यइत्यत्रान्यग्रहणमव्यापृतेप्यध्वर्यावग्नीत्कर्तृत्वे ऽवहननं यथा स्यादितिकर्कः ।

कुक्कुटोसीति त्रिरित्यत्र त्रिःपदस्यमन्त्रेण सहान्वयः ॥ १५ ॥

वर्षवृद्धमसीति शूर्पमादत्ते ॥ १६ ॥

शूर्पादानमध्वर्युरिति गर्गादयः ॥ १६ ॥

तुषान्निरस्यत्यपहतमिति ॥ १९ ॥

एतन्निरसनंलोकाचाराद् द्वितीयकण्डनोत्तरकालं विधेयं सर्वनिष्पत्तेः। तत्त्वद्वितीयकण्डनाद्यमन्त्रम् । एकद्रव्यइत्युक्तेरितिश्रीअनन्तः॥ १९ ॥

वायुर्व इति विविनक्ति ॥ २० ॥

विवेकीकरणं च तुषनिरसनोत्तरमेव पाठक्रमेणै- वेतिचश्रीअनन्तः विवेकीकरणं हि वितुषीभूते- भ्योव्रीहिभ्योरक्ततण्डुलानां पृथक्करणम् ॥ २० ॥

देवोव इति पात्र्या मोप्याभि मन्त्रयते ॥ २१ ॥

अङ्गुल्यग्रेणानुमन्त्रणं इति निगमपरिशिष्टे ॥ स्पृ- शन्ननामिकाग्रेण कचिदालोकयन्नपि अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत् ॥ १ ॥ इति छन्दोपरिशिष्टे कात्यायनः ॥ अभिमन्त्रयते करसंपुटस्थश्च ॥ २१ ॥

समं यिभज्य द्वे दक्षिणत एवमुत्तरतांश्चित- स्थेति ॥ ३२ ॥

समविभागे क्रियमाणे यदधिकं तद्दक्षिणतउप- धानक्रमणैवोपधेयं न सर्वान्ते प्रादक्षिण्यंस्मृत्यनु- ग्रहात्॥ ३२ ॥

चतुर्थीकण्डिका समाप्ता

१ अनु मन्त्रोच्चारणात् पश्चात् मन्त्रणम् मन्त्रेणसंस्कारादिकरण- मित्यनुमन्त्रणः।

उपसर्जनीरधिश्रयति ॥ १ ॥

उपसर्जनीशब्देन संयवनार्था आप उच्यन्ते ॥ तद्धिश्रयणं च ताभिः पिष्टानांमार्दवं यथा स्यादिति। एवं च सति यत्र श्रपणं तत्रैवोपसर्जन्यधिश्रयणमपिकार्य्यम् ॥ उपसर्जन्याधिश्रयणा मुसर्जन्याआनयनसमयएव अध्वर्युः श्रपणेऽग्नौअधिश्रयत्यदृष्टार्थमिति कर्क निष्कर्षः॥ १ ॥

कृष्णाजिनमादत्ते पूर्वत्प्रतिकृष्णाजिनम् ॥ २ ॥

कृष्माजिनस्ययत्पूर्वं धर्मजातमुपदिष्ट मादानादि सव्याशून्यकरणान्तं तदिहातिदिश्यते प्रति कृष्णाजिनमिति ॥ २ ॥

तस्मिन्दृषदं धिषणासीति ॥ ३ ॥

तस्मिन् सव्याशून्ये कृष्णाजिने ॥ ३ ॥

पश्चाच्छम्यामुपोहत्युदीचीं दिव इति ॥ ४ ॥

दृषदधस्ता दुदगग्रां शम्यामुपोहति ॥ ४ ॥

दीर्घामिति कृष्णाजिने प्रोहति ॥ ७ ॥

प्रोहति पिष्टानीतिशेषः ॥ ७ ॥

चक्षुषे त्वेतीक्षते ॥ ८ ॥

ईक्षते पिष्टानीति शेषः ॥ इक्षणं च चरावपिं प्रवर्त्ते ॥ ८ ॥

---

१ उपोहति उपदधाति दृषदः पश्चाद् भागे अधस्तात् स्थापयतीत्यर्थः।

२ इक्षणञ्च द्रव्य संस्कारत्वा त्तण्डुलानामपि चर्विष्ठयां वाजपेयादौ सर्व्वौषधीनां प्रवर्तत इति कर्क देवादयः।

पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् ॥ ९ ॥

आज्यनिर्वापस्तु यजमानेनेति गर्गाद्याः ब्रह्मणेति कर्कसम्प्रदायादयः ॥ ९ ॥

पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्येत्वेति ॥ १० ॥

सपवित्रपात्र्यां पिष्टावापः ॥ १० ॥

श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा ॥ ११ ॥

जघनेन गार्हपत्यमन्तर्वेदिवेति कारावे । अथान्तर्वेद्युपविशति माध्य न्दिने ॥ २१ ॥

पवित्राभ्यां प्रतिगृह्णाति समाप इति ॥ १३ ॥

तथा नयति यथा मन्त्राते ग्रहणं भवति ॥ उपसर्जन्यानयनं च रावपि प्रतिग्रहश्च ॥ १३ ॥

इषे त्वेत्याज्यमधिश्रयत्यन्यः ॥ १७ ॥

अज्याधिश्रयण मग्नीदिति गर्गाद्याः ब्रह्मेति विरोधात् । अविरोधे तु पश्चादावधिश्रयणमध्वर्य्योरेवेति-कर्कः । अतए वाज्याधिश्रयणं त्वग्नीत् । सम्प्रदाये तु-वचनादेव ब्रह्मकर्तृत्वं सर्वत्र ॥ १७ ॥

धर्मोसीति पुरोडाशौ युगपत ॥ १८ ॥

एकस्यैव पुरोडाशस्याज्येन यौगमद्यमितिदेवः । उभयोः पुरोडाशयोरितिकर्काद्याः । तत्र द्वितीयाधिश्रय

३ सपवित्रायामेव चरुस्थाल्यान्तण्डुलावापः । पवित्रस्यादृष्टोपकारित्वादितिकर्कः ।

णं सम्प्रदाये तु कुशोपग्रहेणेति ॥ १८ ॥

अपत्नीकस्याहवनीये तच्छ्रापिणः ॥ १९ ॥

तेन अपत्नीकस्य रजस्वलापत्नीकस्येति कर्कः । पत्नीरहितस्येति देवः ॥ १९ ॥

उरुप्रथा इति प्रथयति यावत्कपालमनति पृथुम् ॥ २० ॥

यावत्कपालमित्युक्ते अनतिपृथुरिति कपालपरिमाणार्थम् । तच्चाश्वशफमात्रमिति ॥ २० ॥

अग्निष्ट इत्यद्भिरभिमृशति सकृत्त्रिर्वा ॥ २१ ॥

आद्भिरिति सहार्थे तृतीया । त्रिःपक्षेऽपि सकृन्मन्त्रेणद्वितूष्णीम् ॥ २१ ॥

पर्यग्निकरोत्यन्तरितꣳ रक्षोन्तरिता अरातय इति सहाज्यम् ॥ २२ ॥

पर्यग्निकरणात् प्राक्पिष्टले पानयनं । तद्धोमपक्षे पात्र्यङ्गुलिप्रक्षालनं तु सर्वमते सामर्थ्यात् ॥ २२ ॥

माभेरित्यालभते ॥ २४ ॥

आलभनं च शृताशृतसंवित्यर्थे अशृते तु पुनः श्रपणं दीयते ॥ ततः पुनर्मन्त्रेण आलम्भ इति सम्प्रदायः ॥ २४ ॥

अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवेषेण वा ॥ २५ ॥

शृतावभिवासयति ॥ शृतज्ञानोत्तरं आच्छादयति ॥ २५ ॥

पान्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयत्यभितप्य प्रत्यगसꣳ स्यन्दमानं त्रितायत्वेति प्रतिमन्त्रम् ॥ २६ ॥

आप्तेभ्य इति विधिगलचतुर्थी यागदेवताज्ञापनार्था तेन तदुद्देशेन त्यागः कार्यः प्रत्यगसंस्यन्दमानं परस्पर मसङ्गच्छन् ॥ २६ ॥

अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥ २७ ॥

अन्वाहार्यपाकार्थं तु लौकिकोदकमिति सम्प्रदायः । प्राणीतमिति कर्कः । तस्य त्रिःप्रक्षालनं निवीतिनाधिश्रयणमित्ति गर्गः ॥ २७ ॥

अपरेणाहवनीयं वेदिं खनति त्र्यङ्गुलखातां व्याममात्रीं पश्चात् त्र्यरत्निं प्राचीमपरिमितां वा प्राक्प्रवणामुदग्वा मध्यसङ्गृहीतामग्निमभितोꣳ सौ ॥ १ ॥

अपरेणाहवनीयं त्र्यरत्निं प्राचीं वेदिं ततोधिकांसौ आहवनीयपूर्वान्तपर्यन्तौ तावपि वेदिवाच्यौ ॥ अतः खन्येते तावपि अंसदेशेऽपोद्य बर्हींषीति प्राशित्रासादनोक्तेः । अनन्तमते तु त्र्यरत्निमध्येएवाहवनीयः । पितृभूतिमते अपरेणाहवनीयं मिमीत इति शेषः ॥

---

१ इति कर्कोक्तः ।
२ एतच्चित्र विस्तृतिस्तु मत्कृतश्रौताधानपद्धतौ ॥

व्यामस्याग्रप्रमाणं तु चतुर्न्यूनं शतं भवेत् ॥ १ ॥
अङ्गुलानि ॥

न परिमिता अपरिमिता ॥ नात्र मात्रास्तीति शेषः । यावती मेव स्वयं मनसा मन्येत तावतीं कुर्यादिति श्रुतेः ॥ अपरिमिता पक्षेपि पश्चात् कल्पितप्रमाणापेक्षया चतुर्थांशहीना प्राची : पुरस्ताच्चविस्तृता च कर्कमतम् । अपरेणाहवनीयमित्यादि अंसौ इत्येवमन्तं सूत्रम् । अग्निमभितो[१]ंसौ' उन्नयतिः अंसौ आमूलौ ॥ १ ॥

वेदिं परिसमुह्य वितृतीयेऽग्निवुत्तरत उत्करं करोति ॥ ५ ॥

वितृतीये वेदिवितृतीये इति कर्कः । गार्हपत्याहवनीययोरित्यनन्तादयः ॥ ६ ॥

पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरति ॥ ९ ॥

तृणे एवेति सम्प्रदायः

प्रहर्णं च वेद्यां न तृणे इति कर्कः । प्रहरणशेष एवेति कर्कः । विकल्पएवेति सम्प्रदायः ॥ ९ ॥

अभिन्न्यस्यत्यग्नीदुत्करमररो दिवमिति ॥ १५ ॥

अभिन्यस्यति हस्तद्वयेन पीडयति ॥ १६ ॥

---

१ तावपि च वेदिशब्दवाच्यावतः खन्येतेनावपि इतरथाहवनीयपश्चिमदिश्येव वेदि खननं भविष्यति । आहवनीयमपरेण वेदिं खनतीत्युक्तेः । सूत्रकारोऽपि अंशयो वेदि व्यवहारं दर्शयति यथा अपोह्यवर्ही षिनिदधात्यंसादेश इति । अन्यथास्तरणेनसंभवेदिति ।

* वेदिरचनप्रकारस्तु मत्कृता धानपद्धतौ सरलः ॥

स्फयेन गायत्रेणेति प्रति मन्त्रम् ॥ १८ ॥

परीगृह्णाति परीग्रहं करोति ॥ १८

वेद्यां त्रिरुल्लिख्याह हर त्रिरिति ॥ १९ ॥

वरुणप्रघासेषु हरविस्त्रिरिति अत्रेति काकाक्षि-गोलकन्यायेन उभयत्र सम्बध्यते ॥ १९ ॥

अत्र वेदिकरणं यथोक्तम् ॥ २२ ॥

अत्र वेदिकरणं खननम् । यथोक्तं त्र्यङ्गुलखातां अथवा आमूलोच्छेदनादोषधीनामिति खनन मभ्ग्रा ॥ २२ ॥

अध्यधिवेदिं प्रोक्षणीर्द्धारयति ॥ २४ ॥

अध्यधि समीपे उपरिभागे च धारयत्यन्तं कर्कमते सूत्रं ॥ २४ ॥

अन्योथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुप-सादय स्रुचः सम्मृड्ढि पत्नीं सन्नह्याज्येनो[1]-देहीति यदीच्छेत् ॥ २५ ॥

प्रैषोयं तिष्ठता कार्यो येन नान्यत्रेदृशोमतः इत्यादिना अनन्तेन प्रैषाः सर्वत्र तिष्ठता धारयति सति धार्यमाणासु प्रोक्षणीषु सर्वे प्रैषाः कार्याः । न प्रै-

---

१ आज्येनोदेहीति णाज्येन गृहीतेन उदूगच्छ ।

२ यदि प्रैषणेच्छाभवति तदाप्रैषणंकुर्य्यात । यदिनेच्छेत्तदा अप्रेषितोप्याग्नीध्र एव कुक्कुटाहननादिवत् प्रोक्षण्यासादनादिपदार्थान् कुर्य्यादितिहरिस्वामिनः । अप्रैषपक्षेऽध्वर्युः पदार्थान् करोतीति देवयाज्ञिकादयः ॥

च प्रैषार्थयोरानन्तर्यम् इध्मशब्दस्य यौगिकत्वात् । वर्हिः शब्दस्य जातिवाचित्वात् । वरुणप्रघासादिष्वनूह इति कर्कः। ऊहः स्यादेवेति गर्गादयः। अनेकपत्नीकेपि पत्नीशब्देऽनूहः। आज्ये वर्हिवत् ।स्रुक् पदे यथार्थमूहः कर्तृपदे च।श्रीअनन्तमते प्रोक्षण्याविति वरुणप्रघासेषु शकलानि उपसादयेति ॥ २५ ॥

गृहमेधापायामिति विशेषः ॥

यथाप्रेषितमन्यः पराधिकारात् ॥ २६ ॥

पराधिकारात् हीनाधिकारात् परं हि निकृष्टमधिकृत्य प्रेषः प्रवर्तते । अपि च निकृष्टेनोत्कृष्टस्य प्रैषणंविरुध्यत्ते यदि चाध्वर्युः प्रेषं करोति अग्नीत्प्रैषार्थम् । ततोध्वर्युणा किञ्चित् कृतंकिञ्चित्कारितं च स्यात् एवं च सतिसमाख्यानुग्रहः स्यात् नान्यथा ॥ २६ ॥

एवं प्राप्ते उच्यते ॥

स्वयं वा अविरोधात् ॥ २१ ॥

स्वयमध्वर्युः प्रैषार्थं करोति । सामर्थ्यादग्नीत् प्रैषपति । कुतः प्रैषार्थस्य प्राधान्यात् तत्कृतः प्रेषस्य तदर्थत्वात् अन्तरङ्गं प्रैषार्थम् वहिरङ्गं प्रैषः। प्रैषार्थेन व्यवहितत्वात् । ततश्च यदन्तरङ्गं प्रधानं च तदध्वर्युः करोति । गुणभूतं वहिरङ्गम् । तदग्नीदिति न्याय्यम् । ननु विरुध्यते एतदित्युक्तम् । नहि निकृष्ट उत्कृष्टं प्रेषयितुमलं मित्यतआह अविरोधात् स्यादयम् । विरोधोयथयं प्रैषः स्यात् । अध्येषणात्वेषा । प्रैषाध्येषण-

---

१ यथावरुणप्रघासेषु प्रोक्षणी रासादयतमित्येवमादि ।

योः कोविशेष इति चेत् । निकृष्टविषयं प्रेषणमुत्कृष्टविषयमध्येषणमिति । यथा लोके माणवकः प्रेष्यते काष्ठान्याहरेति । स्वामिनं प्रत्यध्येषणा स्नाप्यतां भुज्यतामिति ततश्च न विरोधः ॥ २१

किञ्च ।

नच सम्प्रैषवचनमस्ति । यथान्यत्राग्नीदग्नीन् विहरेति कर्कः । देवयाज्ञिकादयस्तु प्रैष प्रैषार्थयोः समाख्यानुग्रहार्थमध्वर्युकर्तृकत्वे प्राप्त्ये आह ।

यथा प्रेषितमन्यः पराधिकारात् ॥ २६ ॥

अन्यः प्रैषार्थे अन्यश्च प्रैषे कुतः पराधिकात् अन्याधिकारात् । नहि कश्चिदात्मानं प्रेषयति इदं कुर्विति । ननु नायं प्रैषः किं तर्हि प्राप्तकालतायां लोट् । तेनाविरोध इति चेन्न । नायं प्राप्तकाले लोट् किन्तर्हि प्रैषएव । सम्प्रैषएवैष इति वचनात् । एवंस्थिते कः प्रैषे कश्च प्रैषार्थे । तत्राग्नीत् प्रैषे अध्वर्युश्च प्रैषार्थे कुतः समाख्यानुग्रहात् ॥ २६ ॥

एवं प्राप्ते आह ।

स्वयं वा अविरोधात् ॥ २७ ॥

स्वयमध्वर्युरेव प्रैषे स्यात् । अर्थादग्नीत् प्रैषार्थे नचैवं समाख्या विरुध्यते तत्प्रयोजकोहेतुश्चेति प्रैषार्थे प्रयोजककर्तृत्वात् एवं किञ्चित् कृतं किञ्चित्कारितमित्युभयत्र समाख्यानुग्रहः कृतोभवति ॥२७॥

---

१ । शत० कां० १ । अ० २ । ब्रा ३ । कण्डि० १ ।

किं च ॥

सम्प्रैषाग्रवचनाच्च ॥ २८ ॥

नचाग्रसम्प्रैषे ऽध्वर्योर्वचनमस्ति यथान्यत्र प्रैषेषु अग्नीदग्नीन्विहर। प्रतिप्रस्थातः पत्नीमुदानयेत्येवम्। किञ्च विरुध्यते च निकृष्टेनोत्कृष्टस्य प्रेषणम्। नचेयमध्येषणा सम्प्रैषएवैष इति वचनात्। तस्मादध्वर्युः प्रैषेऽग्नीत्प्रैषार्थ इति पितृभूतिर्भर्तृयज्ञश्च। श्रीअनन्तादीनां सिद्धान्तोजैमिनेश्चेति ॥ २८ ॥

शृतानि च हवींष्याप्रचरणात् ॥ ३० ॥

आप्रचरणत् आप्रधानयागादिति कर्क देवौ। आस्विष्टकृत इति श्रीअनन्तः ॥ ३० ॥

आपन्नंस्तृणन्निरस्येत् ॥ ३२ ॥

स यदि पुरा वर्हिषस्तरणात्किञ्चिदापद्येत बहिरेव तत्तृणमपास्येत् ॥ ३२ ॥

द्विषतो बध इति स्फ्यमुदञ्चं प्रहरति ॥ ३३ ॥

आरादुपकारकमदृष्टार्थम्। तदुत्तरतउदगग्रं च उत्करे स्फ्यं प्रहरतीति देवः ॥ ३३ ॥

अवनिज्य पाणी अपरेण प्रणीताः स्फ्यं निदधाति ॥ ३४॥

पाणी अवनिज्य दृष्टार्थम्। प्राणीतेनेति कर्कः। लौकिकेनेति सम्प्रदायः। निदधाति प्रागग्रम् ॥ ३४ ॥

१ वेदेरप्यवमर्शनं न कर्तव्यम् प्राक् स्तरणात् तथा च श्रुतिः तेनानवमर्शी यजध्य तथा श्रेया ं सो भविष्यथेति। अवमर्शनं स्पर्शः ॥

२ प्रणीता समीपे ऽध्वर्युः स्फ्य ग सादयति।

इध्माबर्हिश्च ॥ ३५ ॥

उदक्संस्थं प्रागग्रमेव ॥ ३५ ॥

समासोक्तयोः क्रमाभावादतउच्यते ॥

पूर्वमिध्मम् ॥ ३६ ॥

विनियोगक्रमे प्राप्ते पूर्वमिध्ममित्याह ॥ ३६ ॥

प्रणीतादक्षिणेन वाहृत्य ॥ ३७ ॥

प्रणीतादक्षिणेन[1] इध्मस्यैवाहरणमिति कर्कानन्तौ। इध्माबर्हिषेति देवः ॥ ३७॥

स्रुवं प्रतप्य पूर्ववद्वेदाग्रैरन्तरतः प्राक्संमार्ष्ट्य-निशित इति विपर्यस्य बहिर्मूलैः

प्राङुत्क्रम्य ॥ ३८ ॥

मूलैः वेदमूलैरिति देवाद्याः। वेदाग्राणाम्मूलैरिति कर्कः । अन्तरतोबिलप्रदेशे प्राक्संस्थम् । प्रत्यक्संस्थं बिलाधोभागे । देशभेदान्मन्त्रावृत्तिः । प्राङुत्क्रम्येति संमार्गप्रतपने तिष्ठताकार्ये इति देवाद्याः। उपविश्यैवेति कर्कः ॥ ३८ ॥

अनिशितेति स्रुचः ॥ ४० ॥

स्रुचः सम्मार्ष्टि ॥ ४० ॥

तूष्णीं प्राशित्रहरण ; शृतावदानं पात्रींच ॥ ४१ ॥

पात्रीमित्यविशेषात् उद्धरणपात्र्योरिडापात्र्यो-

---

१ प्रणीतादक्षिणेनाहवनीयस्यांतरतश्चेति ।

श्चेति कर्कः । षड्ढवस्तस्यापीति श्रीअनन्तः । देवयाज्ञिकास्तु पुरोडाशपात्र्याएव संमार्गमाहुः ॥ ४१ ॥

अथ सप्तमी कण्डिका ।

पत्नी ; सन्नह्यति प्रत्यग्दक्षित उपविष्टांगार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोदित्यै रास्नेति ॥ १ ॥

सन्नह्यति बध्नाति । तत्कथमित्यतआह प्रत्यगिति । उपविष्टामिति भूतकालप्रत्ययनिर्देशात् पूर्वमेवोपविष्टां नेदानीं यजमानवत् स्वामित्वाविशेषात् । त्रिवृता त्रिगुणेनेति कर्क देवाद्याः । नवगुणेनेति श्रीअनन्तः । सलग्नं त्रिगुणीकृतं मुञ्जमयीं रज्जुमभितः प्रवरग्रन्थित्रययुक्तमन्तयोःपाशग्रन्थिद्वययुक्तंयोक्त्रम् । तेन तद्बध्नातीति हरिस्वामिनः । परिहरति परितो वेष्टयति । अधिवासः वाससः उपरि बहिरित्यर्थः ।

दक्षिणं पाशमुत्तरे प्रतिमुच्योर्द्ध्वमुद्गूहति विष्णोर्वेष्प इति ॥ २ ॥

दक्षिणहस्तस्थोत्तरपाशं वामहस्तस्थदक्षिणपाशमध्ये प्रवयेदिति कर्कार्थः । इति दक्षिणहस्त व्यापारः सिद्धो भवति । देवयाज्ञिकमते तु वामहस्तव्यापारः । अत ऊर्ध्वं योक्त्रमध्ये उद्गूहनसामर्थ्याद् द्विर्वेष्टनम् । एकवेष्टने उद्गूहनस्याशक्यत्वादिति देवः । पत्नीसं-

स्कारात् पत्नीबहुत्वे सर्वासां सन्नहनम् । एकस्या एव सन्नहनमिति श्रीअनन्तः ॥ ३ ॥

ऊर्जेत्वेत्याज्यमुद्वास्य पत्नीमवेक्षयत्य-
दब्धेनेति ॥ ४ ॥

पत्नीबहुत्वे एकैवाज्यमवेक्षते आज्यसंस्कारात् । अतएवापत्नीके पित्र्येष्टौ अध्वर्युरवेक्षत इति कर्क दे- वौ । यजमानएवेत्येके पत्नीप्रतिनिधित्वेनेत्यनन्तः । तदेतत्प्राचीनमतम् । तन्नेति कर्कः । तथाहि प्रतिनिधि- रभावे प्रवर्तते यत्र पुनः शास्त्रतः पर्युदास- स्तत्र कथं प्रतिनिधिः प्रवर्तते । यं प्रतिनिधीयते स एव पर्युदस्तइति । पुरोडाशौ पूर्वेणानीय गार्हपत्योत्तर- तोभूमौ निधाय पत्नीसमीपे नीत्वा पत्न्याज्यमवेक्ष- स्वेत्यध्येषणा साऽवेक्षते अदब्धेनेति ॥ ५ ॥

आहवनीये वा कृत्वा तच्छ्राविणः ॥ ६ ॥

वा शब्दोऽव्यवस्थायामाहवनीये श्रापिणएव ॥६॥

सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च
पूर्ववत् ॥ ७ ॥

च शब्दादाज्यं च पूर्ववत् पवित्राभ्यामित्यर्थः ॥७॥

स्रुवेणाज्यग्रहणं चतुर्जुह्वां धामनामेति
सकृन्मन्त्रः ॥ ९ ॥

सकृत् त्रिर्वा मन्त्रः न ग्रहणलवनेत्यादिसूत्रात्

विकल्पइति कर्क देवौ। सकृदेवमन्त्रवचनमिति श्री-अनन्तः ॥ ९ ॥

अष्टावुपभृत्यल्पीयोनुयाजाश्चेत्[१] ॥ १० ॥

जौहवापेक्षयाल्पीयः चशब्दादुपभृति च सकृत् त्रिर्वा मन्त्रः ॥ १० ॥

चतुरन्यत्र प्रतिविभागात् ॥ ११ ॥

अन्यत्र अननुयाजकेकर्मरायऽन्यद्रव्यके चानुयाजके । कुतः विभागेनोपयोगदर्शनात् ॥ ११ ॥

पश्वातिथ्यादर्शनाच्च ॥ १२ ॥

किञ्च पशावन्यद्रव्यकेऽनुयाजे अथोत्पूयावेक्ष्याज्यं चतुर्गृहीतं जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यमित्युपभृति चतुर्ग्रहणदर्शनात् । तथातिथ्यायामनुयाजाभावे सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णातीति ॥ १२ ॥

न कृत्स्नोपदेशात् ॥ १३ ॥

अथ यदष्टौ कृत्वउपभृति गृह्णाति छन्दोभ्यस्तद्गृह्णात्यनुयाजेभ्योहितद्गृह्णाति ॥ छन्दांसि ह्यनुयाजा इति माध्यन्दिनपाठेऽष्टगृहीतस्यानुयाजार्थत्वेनोपदेशात् । एवं च सति अनुयाजार्थस्यैव वचनात्प्रयाजेषु विनियोगोयथाप्रयाजार्थस्योत्तराघारे ॥ यदुक्तं पश्वातिथ्ययोर्दर्शनादिति ॥ १३ ॥

---

१ अनन्तादीनांमते चेदित्यत्र चशब्दपाठः इहानुयाजानामवैकल्पिकत्वाद्विकल्पार्थश्चच्छब्द इति कर्कः ॥

पश्चातिथ्ययोर्वचनात् ॥ १४ ॥

तत्राह एवं प्राप्तेउच्यते स्यादेतत् एवं यदि कृत्स्नमेतदनुयाजार्थत्वेनोपदिश्यते नतूपदिश्यते । एवं हि शाखिनां वचनम् । यदष्टौकृत्वउपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद्गृह्णातीत्युभयार्थताविधानम् । यत्पुनरुक्तमनुयाजेभ्योहि तद्गृह्णातीति तदनुयाजोभयार्थविधानानुवादः ॥ १४ ॥

ध्रुवायां च जुहूवत् ॥ १५ ॥

जुहूवदित्यत्र वच्छब्दादुपभृति च सकृत्त्रिर्वा मन्त्रः ॥ १५ ॥

इध्मं प्रोक्षति त्रिस्त्रिस्स्य वेदिं च वर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोसीति प्रतिमन्त्रम् ॥ १६ ॥

इध्मप्रोक्षणं ब्रह्मामन्त्रणपूर्वकम् ॥ १६ ॥

शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमिति ॥ १७ ॥

अत्र शेषस्य द्वितीयान्तनिर्देशान्मूलानां च सप्तम्या गुणविभक्त्या निर्दिष्टत्वात् शेषसंस्कार इति केचित् । तन्मते शेषनाशे न मूलोपशेचनम् । अपरे त्वेवत्याहुः अथ याः प्रोक्षण्यः परिशिष्यन्ते ताभिरोषधीनां मूलान्युपनिनयतीति श्रुत्या शेषस्य मूलार्थतैवावगम्यते । तथा ताइमा आर्द्रमूला इति च । तेन मूलसंस्कारएवेति । सूत्रं च यथाश्रुतिवाक्यं

१ श० प० का० १ अ० २ ब्रा० ६ कं० ४ ॥

नेयम्। यश्चाथ याः प्रोक्षण्यः परिशिष्यन्त इति शेषव्यपदेशः सामस्त्यार्थः सोऽपि प्रयोजनं नाशदोषादौ मूलोपनिनयनं कर्त्तव्यमेवेति कर्क श्रीअनन्त देवाः। उभयसंस्कार इत्यन्ये। अवटे शेषमासिञ्चतीत्यत्र शेषप्रतिपत्तिरवटसंस्कारश्चायमिति कर्कोक्तेः। तेननाशदोषादावन्येनासेकोभवत्येव ॥ १७॥

उपपत्त्या वा ॥ २० ॥

बहुलम् ॥ २१ ॥

कर्काचार्यमते भर्तृयज्ञ मतेच उपपत्या वा बहुलमित्येकं सूत्रम् उपपत्यावा अयुग्धातु पञ्चवृत् सप्तवृद्वा तच्चैवं समं निधायेत्यादि सर्वपक्षे स्तरणे स्त्र्योपग्रहः कार्यः॥ बहुलं यथा वेदिर्न दृश्यते ॥ २१ ॥

प्रवृहन्वा ॥ २४ ॥

वृहउद्यमे अस्मिन्पक्षे प्रागपवर्गः। वेदेः पश्चिमभागे तृतीयांशं स्तीर्त्वा तदग्राणि यष्ट्यादिना उद्यम्य तदधस्ताद् द्वितीयं भागमित्येवं शेषः। बर्हिषउपपत्तिरौचित्यं प्रलंबे बर्हिषिसकृत् स्तरणेपि वेदि र्व्याप्यते तेनोपपत्त्या वा त्रिवृद्वा वृहनिष्कर्षे निष्कर्षयन् नतु निष्कृष्य निष्कृष्येति कर्कोक्तेः। तथोच्यमाने तदनन्तरं पृथक्स्तरणं विधेयं तथाच यावन्निःकर्षादन्तरं स्तरणं तावती मन्त्रावृत्तिर्विछिद्य स्तरणात्। अस्मत्पक्षे तु न मंत्रावृत्तिः त्रिवृत्पक्षे नवकृत्वस्तरणमंत्रस्येति श्रीअनन्तः। पश्चादपवर्गपक्षेपीति कर्कः ॥

अत्रोद्वासनमाहवनीयप्रापिणः ॥ २५ ॥

अत्रास्मिन्नवसरे ॥ २५ ॥

इध्मात्समिधमादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन् ॥ २६ ॥

इध्मात्समिधमादायेति समिद्द्वयमिति श्रीअनन्तः आहवनीयं कल्पयति समिधाकृत्वेति कर्कः । इन्धनप्रक्षेपेणेत्यनन्तः ॥ २६ ॥

उल्मुक उदूहत्यनुयाजाश्चेत् ॥ २७ ॥

उदूहनं च व्युहनवद् भूमिसंलग्नयोरेव पुरस्तात्प्रेरयति नोत्पाद्य उदूहनं प्रेरणार्थस्यैव सर्वत्र दृष्टत्वादिति देवः ॥ २७ ॥

सप्तमी कण्डिका समाप्ता ॥

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान्बाहुमात्रान्पालाशवैकङ्कतकाष्मर्यबैल्वान्पूर्वालाभेपूर्वालाभ उत्तरान् खादिरौदुम्बरान्वा मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम् ॥ १ ॥

काष्मर्याभावे बैल्वान् खादिरान्वा औदुम्बरान्वा ॥ १ ॥

१ कल्पयति समर्थं करोति यथा तत्र प्रक्षिप्तं समिदादि भस्मसात्कुर्वेत् ।

(१)प्रथमं परिधि [१] समिधोपस्पृश्य वीतिहोत्रमि-
त्यादधाति ॥ २ ॥

उपस्पर्शनम्परिधिसंस्कारः तेन शतरुद्रियादौ परिध्युपस्पर्शनं कृत्वा कचित्समित्प्रक्षेपः ॥ २ ॥

सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणस्तद्वचन
त्वात् ॥ ४ ॥

सूर्यस्त्वेत्यत्र त्वा इत्यवभृथे आहवनीय वचन-त्वाद्विपरिणम्यते ॥ ४ ॥

आवृत्य वेदिं बर्हिस्तृणे तिरश्ची निदधाति
सवितुरिति ॥ ५ ॥

बर्हिषस्तृणे एवेति गर्गादीनां सिद्धान्तः आहवनीयसमीपाद्वेदेर्बर्हिर्वेदिसमीपे प्रत्यागत्य स्तृतस्यैव बर्हिषः बाध्यत इति गर्ग हरिस्वामि श्रीअनन्त देवादयः ॥

कर्काचार्यास्तु एतच्छ्रुतेरन्यथाव्याख्यानं कुर्वन्ति तद्यथा तस्या स्तृणे आदायेति ॥

अत्र पञ्चमीद्वयमर्थावसातुं शक्यते नेयं पञ्चमी षष्ठ्या अपि द्वयमर्थावसातुं शक्यतइति चेत् सत्यम्। उपलभ्यते विभक्तिव्यत्ययेन अस्तु व्यत्यय-इति चेन्न्यायाविरोधात् षष्ठ्यर्थस्यासम्भवः। तिरश्ची उदगग्रे अतएव प्रागग्रम्बर्हिः स्तीर्य्यते ॥ ५ ॥

अभिनिदधात्यारत्नासव इति ॥ ११ ॥

---

१ प्रथमग्रहणं द्वितीयतृतीय व्युदासार्थम्।

प्रस्तरेऽभिनिदधानं न्युब्जाभ्यां हस्ताभ्याम् ।
आत्वा वसवोरुद्रा इत्यत्र नापामुपस्पर्शनम् ॥ ११ ॥

सव्याशून्ये जुहूं प्रतिगृह्य निदधाति
घृताचीति ॥ १२ ॥

सव्याशून्ये प्रस्तरे । प्रतिगृह्य अग्नीधा प्रत्तां प्रतिगृह्य ॥ ऊर्णं म्रदसं त्वा प्रस्तरे इत्युक्तेरिति: श्रीअनन्तः । शङ्कर मते तु स्यादेव ॥ १२ ॥

पुरोडाशात्रभिघार्योद्वास्योपस्तीर्णे निधायानक्ति
यस्ते प्राणः पशुषु प्रविष्टो देवानां
विष्ठामनु यो वितस्थे आत्मन्वान्
सोम घृतवान् हि भूत्वाग्नि
गच्छ स्वर्यजमानाय

विन्देति ॥ १४ ॥

शृतानां तु पूर्वेणोद्वासितानां तु पृष्ठतः ॥
अञ्जनमुपधानक्रमेण मन्त्रावृत्त्या ॥

एका साधारणीपात्री स्यात्पुरोडाशयोर्द्वयोः ।
आसादनं प्रियेणेति मन्त्रेणानूहितेन च ॥ १ ॥

इति देवैर्विविच्योक्तं भाष्ये च पद्धतावपि । सवनीयपुरोडाशासादने ऊहितः पुनः ॥ २ ॥

प्रियैर्धामभिरित्येवं मन्त्रस्तयुज्यतेकथम् । किञ्च यत्रकपात्र्युक्ता त्र्यम्बकासवनीययोः ॥ ३ ॥

तत्र चैकाभवेत्किश्चपात्रीभेदश्चतैरपि। इष्यते मारुतेष्वष्टौवैश्वानरयुतेषुच ॥ ४ ॥

सङ्ख्ययोद्वासयति ॥ १८ ॥

उद्वासनमुपधानक्रमेण ॥ १८ ॥

प्रियेण धाम्नेति हार्वीर्टिषिवेद्यां कृत्वा ध्रुवा असदन्निति सर्वाण्यालभते ॥ १९ ॥

सर्वाण्यालभते . विनियोगक्रमेणाज्यस्थाल्याज्यपूर्वकम्। कृत्वा स्थापयित्वा श्रोणिमुत्तरेणैवेति कर्कः ॥

इति द्वितीयोऽध्यायः ॥

१होतृषदनं कृत्वा परेण वेदिं श्रोणिं वोत्तरेणेध्मात्समिधमादायाग्नये समिध्यमानायानु ब्रूहीत्याह ॥ १ ॥

एकां समिधाम् ॥ १ ॥

प्रथमस्थानेन प्राक् स्विष्टकृतः ॥ ३ ॥

प्रथमस्थानादिनियमोयजुषां निगदानां चेति भट्टवार्तिके। देवानन्तयोश्च। सचायंसवननियमउच्चैर्धर्मकाणां न यजुषाम्। प्रथमस्थानेन प्रथमसवनेन प्रथमस्वरेणेत्यर्थः ॥

मध्यमेनेडायाः ॥ ४ ॥

स्विष्टकृत्प्रभृतीडान्तं मध्यमेन सवनेन ॥ ४ ॥

अङ्गुष्ठाभ्यां चात्रबाधते पाद्याभ्यां वेदमह

ममुमवबाध इति द्वेष्यम् ॥ ७ ॥

च शब्दाद्यजमानः । अवबाधते भूमिं पीडयति । पादाङ्गुष्ठाभ्यां वेति वा पदविभाषेति केचित् । माध्यन्दिनानां हस्ताङ्गुष्ठाभ्याम् । काण्वानां तु पादाभ्या मित्यन्ये । पादाङ्गुष्ठाभ्या मिति कारोव । विशेषविधानात् पादाङ्गुष्ठाभ्यामेवेति । वा शब्दोवधारणे । वा विकल्पइति भर्तृयज्ञः । अनन्तमते हस्ताङ्गुष्ठाभ्यां पादागुष्ठाभ्यां चेत्याहुः । पादयोरङ्गुष्ठौ पादांगुष्ठौताभ्यां पादाङ्गुष्ठाभ्याम् । अमुमिति पदस्थाने देवदत्तमिति द्वेष्यस्य नामग्रहणम् ॥ ७ ॥

अभावे द्विषन्तं भ्रातृव्यमिति वा ॥ ८ ॥

अभावे द्वेष्याभावे ॥ ८ ॥

यावत्सामिधेनि वेदेदमहं तावतिथेन वज्रेणेति ॥९॥

सामिधेन्योहोत्रा पठ्यमाना ऋचः यावत्योयावत्संङ्ख्यकाः सामिधेन्योयस्मिन्कर्मणि वेद जानीयात् इदमहं तावतिथेन वज्रेण तावत्सङ्ख्याकेन वज्रेण । तत्र पञ्चदश सामिधेनी पक्षे इदमहं पञ्चदशेन वज्रेण द्विषन्तमवबाधे अथवा भ्रातृव्यमवबाधइति एकविंशति पक्षे एकविंशेनेति ॥ ९ ॥

समिद्ध इति प्रागतः सर्वमिध्ममेकवर्जम-
नुयाजार्थेत् ॥ ११ ॥

समिद्धइति प्रागतः समिद्धोअग्नआहुतेत्यतः प्रतीकात्प्राक् प्रथमोयः प्रणवस्तत्र सर्वमिध्ममेकवर्जम-

नुयाजाश्चेत् अनुयाजा भवन्ति । कर्कमते समिद्ध इति-प्रागतः समिध्यमानोऽध्वरेऽग्निरित्यस्याऋचोन्ते यः प्र-णवस्तत्रेत्यर्थः । ऋग्विवृद्धौ च काष्ठवृद्धिर्न भवति । ग-र्गमते ऋग्वृद्धौ इध्मकाष्ठवृद्धिर्भवत्येव ॥ ११ ॥

अनुवचनान्ते वेदेनाहवनीयं त्रिरुपवाज्य स्रु-

वेण पूर्वमाघारमाघार्याहाग्निमग्नीत्सम्मृड्ढीति ॥१२॥

अनुवचनान्ते वृणीध्वं हव्यवाहनोमित्यन्ते । अथ-वा सुयजा च यजेत्यन्ते । वेदेन वेदमूलेनेति श्रीअनन्तः उपवाज्य उपवाजयित्वा । प्रजापतये स्वाहेति श्रीअन-न्तः । ऋजुं दीर्घं प्राञ्चं सन्ततमुत्तरप्रदेशे । पूर्वाघार-मिति कर्मनाम । आघार्य हुत्वा न स्वाहेतिश्रुते नो-त्र स्वाहाकारः । प्रजापतिं मनसा ध्यात्वा होमः ॥१२॥

इध्मसन्नहनैरनुपरिधि सम्मार्ष्ट्यग्ने वाजजि-

दिति त्रिस्त्रिः परिक्रामम् ॥ १३ ॥

अनुपरिधि परिध्युपलक्षितप्रदेशे दक्षिणपश्चि-मोत्तरदेशेष्वग्निं त्रिस्त्रिः संमार्ष्टीध्मसंन्नहनैः क-रणभूतैः । परिक्रामम् परिक्रम्य । अग्ने वाजजिदिति स-कृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम् । संमार्जनेनाग्निं वि-रजस्कमुज्वलङ्करोतीत्यर्थः । आहवनीयं पूर्वेण परीत्य यजतिस्थानस्य दक्षिणपार्श्वेऽग्निं संमार्ष्टि । ततोऽप्र-दक्षिणं परिक्रम्योत्तरस्थः पश्चात् पार्श्वेऽग्निं सम्मार्ष्टि ॥ पुनः प्रदक्षिणं परिक्रम्य यजतिस्थानस्थएवोत्तरपार्श्वे । पुनरप्रदक्षिणं परिक्रम्योत्तरस्थोमध्ये प्रदेशेऽग्निमुप-रितूष्णींसम्मार्ष्टि ॥ १३ ॥

हरिस्वामिनस्तु आहवनीयं परिक्रम्य यजतिस्थानस्थितोदक्षिणपार्श्वे संमार्ष्टि । ततस्तत्रैवस्थितः पश्चिमपार्श्वे ततः पूर्वेण परीत्योत्तरतउपरिचेत्येवं परिक्रमइत्याहुः ॥

अत्र भर्तृयज्ञः अनुपरिधीति तेषु प्रदेशेषु संस्कारस्याग्नेः प्रवृत्तत्वात्संमार्ष्टीति। अत्र कर्कः अनुपरिधीत्युपदेशसामर्थ्यात् । यथोपहितमिति केचित् । नेत्यपरे । नह्ययं परिधिसंस्कारोयेनाभिप्रवृत्त्या तत्क्रमआश्रीयते अग्निसंस्कारश्चायं तेन प्रदक्षिणोपचारोदक्संस्थता सम्पादनाय प्रथमन्दक्षिणतः संमार्ग इति पितृभूति श्रीअनन्त देवादयश्च ॥

यत्र प्रक्रमणं कृत्वा पदार्थः क्रियते सतु । पदार्थैस्तिष्ठता कार्य इति देवस्य संमतम् ॥ १ ॥
एतच्च पुरुषे होमे स्पष्टमेव प्रपश्चितम् । प्राङुत्क्रम्येति सूत्रे या अनन्तैश्च प्रपश्चितम् ॥ २ ॥

कर्काचार्यमते तु स्यात् उपविश्यैव कर्म तत् । एकैकस्मिन्प्रदेशो त्रिस्त्रिः सम्मार्गो भवेदिह ॥ ३ ॥
तत्रैकद्रव्यसूत्रेण मन्त्रः स्यात्तुपृथक्पृथक् । अत्रैके तु सकृन्मन्त्रवचनं न पृथक् पृथक् ॥ ४ ॥
देशभेदेपि संस्कार्यद्रव्यैकत्वान्नतत् पुनः । युक्तं तूष्णीमुपर्यत्र श्रुतौ सूत्रेपि पठ्यते ॥ ५ ॥
केचिच्चेतरथावृत्तिमिच्छन्त्येके सकृत् पुनः ॥ ६ ॥

अपरमाहवनीयादञ्जलिं करोति नमोदेवेभ्यः स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥ १५ ॥

अपरमाहवनीयात् स्रुचौ पूर्वेण नमस्कारत्वात् पुटाञ्जलिः । दक्षिणतः प्रथमाञ्जलेर्दक्षिणतश्चेति श्रीअनन्तदेवौ ॥ आहवनीयाद्दक्षिणत इति पितृभूतिः ॥१५॥

अप उपस्पृश्य सुयमेम इति जुहूपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणातिक्रामत्यङ्घ्रिणा विष्णन्निति ॥ १६ ॥

पित्र्यत्वात्प्राप्ते अपामुपस्पर्शने पुनर्विधानं प्राचीनावीत्यादिपित्र्यधर्मव्युदासार्थम्

उत्तरां जुहूं कृत्वा सुयमेम इति जुहूपभृतावादाय दक्षिणा दक्षिणस्यां दिशि ॥ १६ ॥

प्रथमा कण्डिका समाप्ता ।

(१)सव्येनेतो दक्षिणेनामुतः ॥ १ ॥

इतोहोमार्थं यजतिस्थानं प्रतिगच्छन् । अमुतो यजतिस्थानादागच्छन् ॥ १ ॥

वसुमतीमित्यवस्थायेत इन्द्र इति जुहोत्युत्तराघारम् ॥ २ ॥

वसुमतीमित्युदक्प्राङवस्थायेति पितृभूति देव भर्तृयज्ञाश्च । मसुमतीमित्यवस्थाने करणमन्त्रः । सम्प्रदायमते तु अवस्थाय जपः । उत्तराधारमितिकर्मनाम । ऋज्वाद्याघारधर्मेण दक्षिणप्रदेशो प्रयाजार्थद्रव्यैकदेशेनोत्तराधारः ॥ २ ॥

आघार्यासंस्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवां

१ यजतिस्थानं वामेन चरणेन गच्छेत् ततो दक्षिणे नाऽऽगच्छेत्.

समनक्ति संज्योतिषेति ॥ ३ ॥

जौहवेनेति वक्तव्ये यज्जुहेति तत् स्रुवस्य करणतान्युदासार्थम् । तेन जुह्वा कृत्वा जौहवेन च सञ्ज्योतिषेति गच्छतामिति कर्कमतेध्याहारः ॥ ३ ॥

निधायेध्मसन्नहनान्यादाय ओश्रावयेत्याह ॥ ४ ॥

निधाय स्रुचौ स्वस्थाने ॥

संमृष्टा उपविशत इतिवक्ष्यमाणत्वात्तिष्ठता आश्रावणप्रत्याश्रावणानि ॥ ४ ॥

वेदिबर्हिरिध्मशकलमपच्छिद्यैके ॥ ६ ॥

वेदिवर्हिरपच्छिद्य अथवा इध्मस्य वा शकलमपच्छिद्येतिश्रुतेः ॥ ६ ॥

एवं सर्वत्राश्रुतप्रत्याश्रुतेषु ॥ ७ ॥

एवं सर्वत्राश्रुतेऽध्वर्युः प्रत्याश्रुतेऽग्नीदित्यर्थ इति कर्क देवौ ॥ एवमिध्मसन्नहनान्यादाय सर्वत्राश्रुतप्रत्याश्रुतेष्विति भर्तृयज्ञ पितृभूति श्रीअनन्ताः ॥७॥
पुनर्यागसम्बन्ध्याश्रावणप्रत्याश्रावणयोरग्नीद्धस्तस्थसन्नहन सुग्द्वाराध्वर्योरन्वा लम्भ इत्याह ॥ ७ ॥

मनुवदिति वा सर्वेषाम् ॥ १२ ॥

मनुवदिति पक्षे सकृदेव ॥ १२ ॥

ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्राविताराऽसौ मानुष इति होतृनामग्रहणम् ॥ १३ ॥

असौ मानुष इति होतृनामग्रहणमित्यत्र देवद-

त्तोमानुष इति भर्तृयज्ञः देवभाष्ये च। श्रुतिव्याख्याने असौ देवदत्तोयज्ञदत्तोवामानुष इति हरिस्वामी। सूत्रग्रन्थव्याख्याने असावित्यस्य पदस्य स्थाने अमुकशर्मेति होतुर्नामग्रहणमाह। पद्धतौ तु अमुकशर्मा होता मानुष इति। तत्र होता इति पदस्यानुच्चारणं युक्त्यन्तरभाविधानात्। कर्कमते शर्मपदस्यापि नामकरणे शर्मब्राह्मणस्येतिसूत्रे शर्मशब्दः सुखनीयवचनः सुखनीयं ब्राह्मणस्य कर्त्तव्यं यथा शुभङ्करः प्रियङ्कर इति कर्काचार्यैर्व्याकृतत्वात्। भर्तृयज्ञास्तु तत्र ब्राह्मणस्य नाम्नि शर्मेत्यनुषङ्गो भवतीत्याहुः॥१३॥

अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः॥ १५॥

स्रुगादापनसंज्ञकं मन्त्रम्। उदीच्चिते स्रुवोरादानकाले प्रकरणात्सर्वत्र स्रुगादापनेषु प्राप्तेष्वाह प्रयाजेषु सन्निधेरिति प्रयाजेष्वेवोदीक्षिते सन्निधेर्विशेष प्रकरणादिति पितृभूतिः। समित्प्रयाजादारभ्य आस्विष्टकृतः अविमोकेनाध्वर्युः स्रुचावादत्ते ते आदापयति होता। अग्निर्होतेति भर्तृयज्ञः। सन्निधिरवान्तरप्रकरणार्थः सन्निधेर्विकृतिविषयत्वात्। एवं स्रुगादापनस्य प्रयाजार्थत्वे सति पशावेकादशप्रयाजोत्कर्षे पुनः स्रुगादापनं प्रवर्त्तत इति सर्वसिद्धान्तः॥ १५॥

घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्च प्रयाजान्समिद्धतमे॥ १६॥

घृतवतीशब्दे उक्ते इति देवः। घृतवतीसंपूर्णे

मन्त्रे उक्ते इति कर्कः ॥ प्राप्ते एवातिक्रमणे पुनर्वचनमपुरोनुवाक्यार्थम् । परिसंख्यानार्थं पञ्चेति ग्रहणं पञ्चैतानि प्रयाजकर्माणीति ज्ञापनार्थम् ॥ समिद्धतमे अतिप्रदीप्ततमे आहवनीये समिधोयजेति प्रथमे प्रयाजे ॥ १६ ॥

यजयंजेति शेषम् ॥ १७ ॥

द्वितीयादिप्रयाजचतुष्कं प्रति यज यजेति प्रैषः । प्रयाजशेषेऽमुंयजामुंयजेति प्राप्ते यज यजेत्येवं प्रैषं ब्रूयादित्यर्थः ॥ १७ ॥

ध्रुवस्तिष्ठन् ॥ १८ ॥

यत्रावस्थितः प्रथमप्रयाजहोमं कुर्यात्तत्रैवावस्थितोऽविचलंस्तिष्ठन् तत्र नितरांश्चतुरः प्रयाजहोमान् कुर्यात् ॥ १८ ॥

पूर्वं पूर्वं वाभिक्रामम् ॥ १९ ॥

अथवा यत्रस्थितेन प्रथमप्रयाजोहुतस्तस्मात्प्रदेशात्पूर्वप्रदेशेऽभिक्रमणं कृत्वा प्रथमप्रयाजो यत्र हुतः ततः पूर्वप्रदेशे द्वितीयप्रयाजहोमं कुर्यात् । एवमेवं तृतीयादिष्वभिक्रमणहोमौ ॥ १९ ॥

उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम्[1] ॥ २० ॥

अनवमृशन् जुहूपभृतोः स्पर्शमकुर्वन् आनयत्येकदेशं चतुर्थम् प्रयाजं प्रति ॥ २० ॥

---

१ अर्धमौपभृतस्य जुह्वामानयनङ्कर्तव्यमित्यापस्तम्बाभिप्रायान्त ।

एवं प्रवृद्धौ ॥ २१ ॥

चतुर्थे प्रयाजे समानयति विकृतौ प्रयाजप्रवृद्धौ[1] ॥२१॥

उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति ॥ २२ ॥

उत्तरां जुहूं प्राचीमवहृत्य उपरिभागेणैव प्राचीमवहृत्य उपभृदग्रेणावतार्य जुहोति। पुनरध्युह्य तेनैव मार्गेण उपभृत उपरि निधाय एवं प्रतिहोमं वारंवारम् ॥ २२ ॥

एवं सर्वत्र ॥ २३ ॥

नकेवलं प्रयाजेषु सर्वहोमेष्वेवमेव ॥ २३ ॥

द्वितीयाकण्डिका मसाप्ता।

नाभिदेशे धारणम् ॥ १ ॥

सर्वत्रानुवृत्तौ नाभिदेशे जुहूभृतोर्धारणं कर्त्तव्यं होमसमये तु अवतार्य जुहूं होमः ॥ १ ॥

प्रयाजानुमन्त्रणमेको ममैका तस्य योस्मां द्वेष्टि यं च वयं द्विष्म इति ॥ २ ॥

प्रयाजानुमन्त्रणं देवतोद्देशेन द्रव्यत्यागोत्तरमग्नौ हुतस्य प्रयाजद्रव्यस्यानुमन्त्रणम् ॥ तद्‌द्रव्यस्यावलोकनं कुर्वतोमन्त्रपाठः एकोममेति तच्चैतद्याजमानमकरणमन्त्रत्वादिति कर्कः ॥ २ ॥

याजमानमिदं भाष्ये करणत्वोक्तिनस्ततः।

---

१ चतुर्थे चतुर्थे प्रयाजे समानयनं भवति अर्थात् चतुर्थ सप्तम दशमे चित्यादिषु।

अन्यत्राकरणे मन्त्रे यजमानोभवेदिति ॥ १ ॥

एवं च सति द्वितीयां वाध्वर्युरिति स्वकृतव्याख्यानाविरोधः ॥ यथा अपरेतु ॥ जपं याजमानमिच्छन्ति मन्त्राश्चाकर्मकरणा इति सूत्रितत्वात् तेनाध्वर्युरित्युच्यते इति तदेतन्नातीवशोभते अकरणत्वेपि सति प्रत्याशीर्योगेनैव याजमानस्येष्टत्वात् । नचात्राशीर्योगः ।

यज्ञशास्त्रे जपत्वेपि प्रत्यगाशीर्युजिर्यदि ।
यजमानस्यकर्तृत्वंतदैवस्यान्नचान्यथा ॥ १ ॥
इति कर्कस्य सिद्धान्तस्तथानुयाजमन्त्रणे ।
भाष्ये प्रोक्तं समाख्यावात्प्रत्यगाशीर्युजिर्नच ॥ २ ॥
तच्चाध्वर्युः करोतीति तच्चैतन्नानुसंमतम् ॥
तेन चोत्तरमन्त्रेषु प्रत्यगाशीर्युजेषु यः ॥ ३ ॥
च शब्दस्तेन पुर्वेषु याजमानं ह्यभिष्यते
द्वितीयामिति सूत्रस्य भाष्येनेयं मतान्तरात् ॥ ४ ॥

एवं मिथुनैर्यथासंख्यम् ॥ ३ ॥

एवं मिथुनैः पुंल्लिङ्गस्त्रीलिङ्गवद्भिर्यथा संख्यं द्वितीयसंख्यामिथुनेन चत्वारोमम चतस्रस्तस्येति चतुर्थे ॥३॥

न तस्य किंचनेति पञ्चमे ॥ ४ ॥

पञ्चमे पञ्च मम न तस्य किं चन योस्मानिति ॥ ४ ॥

त्विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नाद

इति च ॥ ५ ॥

च शब्दः समुच्चये समुच्चयश्चाकरणत्वात् ब्राह्मणेन

समाम्नातत्वान् मन्त्राणामादिनिर्देशः ॥

त्विषिमान्भूयासमित्यादिप्रयोगः अत्र यथासंख्य-मित्यनुवर्तत्त एव त्विषिमाननुमन्त्रणादिदं भिद्यते पृथक्विधानात् अतः श्वासावसानं प्रयोगः। आशी-र्योगादत्र यजमानः। चात्पूर्वत्र ॥ ५ ॥

आगन्तूनां चतुर्थपञ्चमाभ्यां स्थानात् ॥ ६ ॥

आगन्तूनां विकृतौ चतुर्थ पञ्चमयोर्मध्यस्थाने या-गात्। अर्द्धानां चतुर्थेन अर्द्धानां पञ्चमेन यथालिङ्गम्। एकदेवताकाश्चतुर्थेन चतुर्थानन्तरमागतनां यागात् ॥

अनेकदेवताकाः प्रथमेन प्राथम्यात् ॥ ७ ॥

सर्वान्त्रोत्तमेनोपायित्वात् ॥ ८ ॥

चतुर्थे इष्टे पञ्चममुत्कृष्य तत्स्थाने आगन्तव उपयन्ति उपगच्छन्ति अतस्ते उपायिनः अतः पञ्चमस्थाने उप-गतत्वात्। उत्तमेनानुमन्त्रयेदागन्तवः ॥ ८ ॥

एत्य जुह्वाभिघारणं ध्रुवाया हविष उपभृतश्च ॥ ९ ॥

जौहवेन जुह्वा कृत्वा हविषः स्थाल्याज्यपुरोडाश-योश्चेति श्रीअनन्त देवौ ॥ ध्रुवादीनामुच्चारणं स्थाल्या-ज्यव्युदासार्थमिति कर्कः। यजतिस्थानादेत्य आगत्य वेदेः पश्चादिति श्रीअनन्तः। अपरेतु वेदेरुत्तरतोध्वर्यु-स्थानमिच्छन्ति ॥ ध्रुवायाः ध्रौवस्य उपभृत औपभृ-स्य च ॥ ९ ॥

आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥ १० ॥

आज्यभागाभ्यामिति कर्मनाम चरति यजति ॥१०॥

चतुरवत्तं सवषट्कारासु ॥ ११ ॥

चतुरवत्तं सवषट्कारास्वित्याज्ययागविषयम् । ओषधसान्नाय्ययोः तस्यद्धिरवद्यतीत्यादिना धर्मविशेषविधानात् । अत एव कर्काचार्यैराहवनीययजतिकृतत्वात् ॥

ध्रुवायाः सवषट्कारत्वाच्चतुर्गृहीतमाप्याय्यैवेत्युक्तम् । अतो भर्तृयज्ञाचार्याः चतुरवत्तं हविर्धर्मोऽनारभ्य विधिश्च स आज्यस्योपस्तीर्य द्विर्हविषोवदायाथोपरिष्टादाज्यस्याभिघारयतीति साप्तदश्यवत् । पुनर्वचनादन्यहविर्विषये सोमे आज्ये च ॥

यजतिषु चतुरवत्ते न प्राप्नोतीत्यत आरभ्यते ।

चतुरवत्तं सवषट्कारासु ॥

तद्धं चतुरवत्तं भवतीति वषट्काराहुतिसंयोगेन चतुरवत्तस्य श्रवणादिति पितृभूतिः । देवयाज्ञिकास्तु यत्र यत्र चतुरवत्तं दृश्यते आज्यभागपत्नीसंयाजोपांशुयागोग्निहोत्रादावपि । तत्र तत्र जमदग्नीनां पञ्चावत्तमेव भवति इतरेषां चतुरवत्तं भवति ॥ ११ ॥

अनिधायावदायावदाय ध्रुवामभिघारयति, आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः सूर्याया ऊधो अदित्या उपस्थ ऊरुधारा यज्ञे अस्मिन्निति ॥ १२ ॥

अनिधायावदाय ते एत च्छिष्टकृति विमोचनमागच्छत इत्युक्तत्वात् ॥ अनिधायेतिस्रुचावित्युक्तम् ।

अवदायावदायेति वीप्सा प्रतिस्रुचविषया चतुरवत्त विषयत्वे ह्यनुपपत्तिः ॥

चतुर्गृहीतमस्त्येकं ध्रुवायाहि ततो यदि ।
गृह्यते चेच्चतुः कृत्वआज्यमाप्यायनं विना ॥ १ ॥
निः शेषं ध्रौवमाज्यं स्यान्नैवाप्यायनसंभवः ।
ध्रौवाच्चाहवनीयस्य यागार्थे हि चतुर्ग्रहः ॥ २ ॥
स मिष्टयजुषोप्यर्थे ध्रौवं चातुर्गृहीतकम् ॥
युज्यते तो ध्रुवायाः स्या दाप्यायनं प्रतिस्रुवम् ॥३॥
अन्त्यापच्छिन्नके युक्ता प्यायनं तु यथार्थतः ॥ ४ ॥

अतोनुवचनप्रैषौ यथादेवतममुष्मा. अनुब्रूहीत्युक्त्वादग्नयेनुब्रूहीत्युक्त्वावदानं ग्राह्यं तथा वरुणप्रघासादौ अनुवचनप्रैषानन्तरमेवावदानं दृश्यते ततोतिक्रमणमाश्रावणप्रत्याश्रावणे ततोऽग्निंयजेत्येवं सर्वत्र ॥ १२ ॥

अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाश्रावणात् ॥ १३ ॥

नापव्याहरेन्न किमपि वदेदऽध्वर्युः होता चाश्रवणं यावत् ॥ १३ ॥

आश्राविते ग्नीदाप्रत्याश्रावणात् ॥ १४ ॥

प्रत्याश्रावणमस्तु श्रौषडिति ॥ १४ ॥

प्रत्याश्राविते ध्वर्युराहोतृप्रैषात् ॥ १५ ॥

होतृप्रैषोयजेति ॥ १५ ॥

सोमे च ग्रहं गृहीत्वोपाकरणात् ॥ १६ ॥

तृचाभ्यां ग्रहं चमसं वोपस्पृस्योपावर्तध्वमिति

स्तोत्रोपाकरणमेषोत्तमे होतृप्रैषे ॥ १९ ॥

आग्नेयमुत्तरपूर्वार्द्धे दक्षिणपूर्वार्द्धे सौम्यम् ॥२०॥

उत्तरपूर्वार्द्धे ऐशान्याम्। दक्षिणपूर्वार्द्धे आग्नेय्याम्॥२०॥

समिद्धतमे वा ॥ २१ ॥

समिद्धतमे प्रदीप्ततमे ॥ २१ ॥

हविर्भ्यां च ॥ २२ ॥

हविर्भ्यां आग्नेयपुरोडाशाग्नीषोमीयपुरोडाशाभ्याम्। च शब्दात् समिद्धतमे चरतीति वाक्यशेषः॥

तत्रायं क्रमः अग्नयेनुवचनम् उपस्तारः आग्नेयपुरोडाशस्य मध्यदेशात् पूर्वप्रदेशाच्चाङ्गुष्ठपर्वमात्रमवदानमसंभिन्दन्। पश्चार्धतिनः प्रश्चात्तृतीयम्। अभिघारः क्षतामभ्यङ्कः। अतिक्रम्याश्राव्याग्निं यजेति प्रैषः। वषट्कारेण सह होमो वषट्कृत्ते वा। उभयतश्चाज्यं हविषः॥ अत्रापस्तम्ब सूत्रे विशेषः। सान्नाय्यचरुपुरोडाशानां पार्श्वेन जुहुयात् द्रवाणां प्रस्रवणेनेति ॥ २२ ॥

पुरोडाशावन्तरेणाग्नीषोमा उपांश्वाज्यस्य ॥ २३ ॥

पुरोडाशौ अन्तरेण आग्नेयाग्नीषोमीयपुरोडाशयागयोर्मध्ये आग्नेययागानन्तरं प्रागग्नीषोमीयपुरोडाशयागात् ॥

आज्यस्याहवनीययजतयोपांशुयाया इत्युक्तत्वात् ॥

---

१ उपावर्तध्वमित्ययं स्तोत्र प्रैषः उपाकरण शब्देनोच्यते तद्व्यतिरिक्तं किमपि न ब्रूयात्।

ध्रौवाज्यस्योपांशु अग्नीषोमौ यजति। तत्र देवता-न्यत्राति देव तापदमात्रमेवोपांशु तत्राग्नीषोमाभ्या-मित्युपांशूक्त्वा अनुब्रूहीत्युच्चैर्वदेत् । ततोध्रुवातश्च तुरवदायातिक्रम्याश्राव्याग्नीषोमावित्युपांशूक्त्वा य-जेत्युच्चैरित्येवमुपांशुयागः ॥ २३ ॥

विष्णुर्वामावास्यायां हौत्राम्नानात् ॥ २४ ॥

हौत्राम्नानात् विष्णुश्चेदिदं विष्णुरित्येवं हि हौत्रे आम्नाय इति ॥ २४ ॥

असंसृष्टास्ताहुतिभिः ॥ २८ ॥

असंलग्ना इतराहुतिभिः सह ॥ २८ ॥

तृतीया कण्डिका समाप्ता ॥

निधाय सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽन्यतरत आज्यमु-भयतो वाऽऽग्नेयात् ॥ १ ॥

अध्वर्योः सञ्चरम्। एकैकस्माद्धविषो द्वे द्वे यवमात्रे पिप्पलमात्रे वा अवदाने अवद्यति आग्नेयस्य तु म-स्तकप्रदेशाद्वै अन्यतरतः अधस्ताद्वा उपरिष्टाद्वा प्रा-शित्रावदानस्येति पितृभूतिः। देवयाज्ञिक मते निधायेत्यादि पिप्पलमात्रं वेसन्तं सूत्रम्। अन्यतरत आज्यम्। उभयतो वा । आग्नेयादिमानि पृथक् सूत्राणि ॥ भर्तृयज्ञ कर्क श्रीअनन्तमते निधायेत्यादि आग्नेया-दित्यन्तमेकं सूत्रम् ॥ १ ॥

यजमानभागं पुर्व्वार्द्धादुदीर्घप्रशीर्य पुरःाद्ध्रुवायाः करोति ॥ ४ ॥

ध्रुवाग्रस्योपरि निदधातीति कर्क इति देवः । तन्नकर्कार्थः ध्रुवायाः पुरस्तादिति व्यतिरिक्तदेशे करोतीति कर्क लेखः । ध्रुवाव्यतिरिक्तदेशे वर्हिषी करोतीत्यर्थः । तथा च पाश्चात्यपर्शैनिषिञ्चत इति सूत्रे संस्काद्धाचाव्यतिरिक्त इति भाष्यं ॥ ध्रौवाज्यविवक्षया देवोक्तिः ॥ ४ ॥

सर्वे ऽन्वारभन्ते ॥ १० ॥

इडां सर्वेन्वांरभन्ते । होतारमिति कर्कः । कुशैरन्वारम्भ इति नियम इति कात्यायनः ॥ १० ॥

इडोपहूतेत्युच्यमाने आग्नेयं बर्हिषदं करोति ब्रध्नपिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून् मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्वेति ॥ ११ ॥

चतुर्द्धाकरणमध्वर्युकर्त्तृकम् ॥ ११ ॥

बर्हिषि ऋत्विग्भ्य आदिशति ॥ १२ ॥

आदेशोयाजमानिक इति । चतुर्द्धाकरणादियजमान एवेति कर्कः । देवपद्धतौ चतुर्द्धाकरणमाग्नेयादेव । प्राशित्रे हविर्मात्रात ॥ १२ ॥

उभौ वाविशेषात् ॥ १४ ॥

अन्येभागा उभाभ्यां पुरोडाशाभ्यामिति कर्कः। प्राशित्रेडाव्यातिरिक्ताः सर्वे भागा आग्नेयादेवेत्यन्यं। देवभाष्ये तु कर्क भाष्यवत् ॥ उभौ प्राशित्रहरणार्थेऽवद्येयौ ॥ १४ ॥

अत्र पितर इति यजमानो जपति ॥ १५ ॥

विसर्गस्यालम्भपूर्वकत्वात् अत्रपितरइति भाग-मालभ्य जपति ॥ १५ ॥

विसृज्यामी मदन्तेति ॥ १६ ॥

अत्रामीमदन्तपितर इति पित्र्यमन्त्रत्वाद्विपर्यस्य पित्र्येष्वित्युक्तेः प्राचीनावीतित्वं दक्षिणाभिमुखता चापउपस्पर्शनश्चेति सर्वसम्मतम् ॥ १६ ॥

एकैकमाहरति ॥ १७ ॥

भागिनेभागम्। षडवत्तसम्पादनाय हस्ते पात्रे वा स्थलद्वयोराज्येनोपस्तारः तत्रपुरोडाशखण्डद्वयं नि-धायाज्येनाभिघारयेदिति गर्गः। कर्कमते तु पुरोडाश-खण्डद्वयमेव नोपस्ताराभिघारौ। अथ द्वितीयमुपहूतो-द्यौरिति काण्वे ॥ १७ ॥

उपहूतां प्राश्नन्ति युक्ताः ॥ २१ ॥

उपहूतामिडां युक्ताऋत्विजः ॥ २१ ॥

पवित्रयोर्मार्जयन्ते परेण वेदिं सुमित्रिया न इति ॥ २२ ॥

पवित्राभ्यां मार्जनमिति कर्क हरिस्वामिनौ । पवित्रस्थाभिरद्भिरिति गर्गादयः ॥ २२ ॥

यजमानस्य प्राणपानौ पातमिति प्रस्तरे ते करोति ॥ २३ ॥

ते पवित्रे ॥ २३ ॥

भागमस्मै परिहरति ॥ २७ ॥

अस्मै ब्रह्मणे परिहरति ददाति आहवनीयं पूर्वेण प्रदक्षिणं परि शब्दात् । अयं चतुर्द्धाकरणव्यतिरिक्त- इति सर्वे । भर्तृयज्ञास्तु अस्मिन्काले चतुर्द्धाकरणभाग- मेव परिहरन्नेवाधिकमित्याहुः । यजमानभागं च गार्ह- पत्यमपरेण नीत्वा यजमानाय समर्पयतीति देवः । यज- मानस्यपरेणेति भर्तृयज्ञाननतौ । आहृतं ब्रह्मभागं प्रा- शित्रहरणे निदध्यात् । तमिष्टौ संस्थितायां प्राश्नी- यादिति लाट्यायने ॥ २७ ॥

यजमानभागं चाप्रोषिते ॥ २८ ॥

कुशेषु यजमानभागमित्याश्वलायनः । अप्रोषि- तेऽअवसिते च शब्दात् परिहरति ददाति ॥ २८ ॥

अन्वाहार्यमभिधार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते प्रजापतेर्भागो ऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्ग- स्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रा-

मुष्मिंल्लोक इह चेति ॥ २९ ॥

अन्तरा ब्रह्मयजमानयोराहरणम् । वेद्यां निधाय तीर्थेन प्रविश्यालम्भइति सम्प्रदायः । अन्तरालेनानीय वेद्यां निधाय पुनर्यथागतमागत्येति हरिहरः । अन्तरा ब्रह्मयजमानयोराहवनीयं पूर्वेण प्राणितोत्करावन्तरेण नीत्वा वेद्यां निधायेति देवः । ऋत्विजः अयं व ओदनः प्रतिगृह्णीतेति ॥ २९ ॥

सादक्षिणा[1] ॥ ३० ॥

देया ॥ ३० ॥

चतुर्थी कण्डिका समाप्ता ॥

समस्योल्मुके[2] समिधमादायाह ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥ १ ॥

उत्तरस्यां दिशि उद्वासनकाले दानोत्तरं वा । समस्य एकीकृत्य ॥ १ ॥

एषा त इति होतानुमन्त्रयते ॥ २ ॥

होता समिधमनुमन्त्रयते ॥
स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि ।
अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत् (३)॥ २ ॥

---

१ स दक्षिणेति वक्तव्ये संनिकथनं दक्षिणेति विधेयगतलिङ्गाभिप्रायेणेति महादेवः ॥

२ उल्मुकसमासश्चानुयाजार्थआहवनीयसंस्कार अतश्चसमासविस्मरणे अनुयाजसमाप्त्यनन्तरं पुनरसमास इति देवः ।

३ इति कर्मप्रदीपे ।

चतुर्थं समानीय प्राचीम् ॥ १३ ॥

**चतुर्थं समानीय प्राचीं देवेभ्यः स्वाहेति जुहोति ॥१३॥**

यथादेवतमन्यत् ॥ १८ ॥

**अग्नेः अग्नीषोमयोः अग्नीषोमयोः । अग्निः अग्नीषोमौ अग्नीषोमौ पौर्णमास्याम् । अग्नेः विष्णोः इन्द्राग्न्योः अग्निः विष्णुः इन्द्राग्नी अमावास्यायाम् ॥१८॥**

अभ्युक्ष्य जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रति मन्त्रम् ॥ २० ॥

**अत्र भर्तृयज्ञः अभ्युक्ष्य स्रुवावित्येके । सञ्चरमित्यपरे । जुह्वास्यात्कर्मेति कर्कः ॥**

**वसुभ्यस्त्रयाणां परिधय इत्युक्तेर्न रुद्रेभ्य इति ।**

**नात्रापामुपस्पर्शनमिति कर्कः । अनन्तमते तु स्यादेव ॥ २० ॥**

**पञ्चमी कण्डिका समाप्ता ॥**

विधृती स्थाने कृत्वानक्त्येनं व्यन्तु वय इति ॥ ४ ॥

**विधृती स्थाने यतः उपात्ते इति भर्तृयज्ञ पितृभूत्यादयः । विधृत्योस्थानमाहवनीयः सर्वहविषां तदधिकरणत्वादिति कर्कः ॥ ४ ॥**

मरुतामिति नीचैर्हृत्वा तृणमादायानु प्रहरति ॥ ६ ॥

**नीचैर्हरणं भूमिसंलग्नस्यैव हरणमिति श्रीअनन्तः ॥**

निचैरिवेति भर्तृयज्ञः। तृणमादायानुप्रहरणम् ॥ सूक्तवाकान्ते इति पितृभूति कर्क देवादयः ॥ अनु शाब्दात्सूक्तवाकमन्विति लभ्यते तस्य प्रकृतत्वादित्य नन्तः ॥ ६ ॥

हस्तेनाचरति ॥ ७ ॥

आचरति प्रस्तरं अग्नौ हस्तेन स्निग्धमभ्यवहरतीति भर्तृयज्ञाः ॥ अग्नौ हुतं प्रस्तरं हस्ताङ्गुलिभिः प्राञ्चं प्रास्येदिति पितृभूतिः ॥ आचरणमुपसमूहनमिति कर्कः। आचरणं अदग्धस्य पुनः प्रक्षेप इति श्री अनन्तः ॥ ७ ॥

सूक्तवाकान्ते ॥ १२ ॥

तं प्राचमनु तं प्रकृतं प्रस्तरं प्राचं प्रागग्रं सूक्तवाके उक्तप्राये समस्यति समग्रमेव प्रक्षिपतीत्यर्थ इति हरिस्वामिनः। तं प्राचमनुसमस्यति प्राची हि देवानां दिगथोदश्चमिति श्रुतेः। अस्यान्यथाकरणे श्रौतं प्रायश्चित्तम्। सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र सूक्तवाकस्यैव याज्यात्वात्। अतृत्रणं ग्रन्थगौरवभयाच्च प्रस्तर आहुतिमिति वचनादिति पितृभूतिः। मान्त्रवर्णिक्ये देवता इति चन्द्रदेवता इति चन्द्रदेवतासंयोगाच्च याग इति श्रीअनन्त देवादयश्च। सूक्तवाकान्त इत्यस्य तृणमादायानुप्रहरतीत्यनेन सम्बन्धः। सर्वत्र पूर्वेणाहवनीयमेकेषामपरेण गार्हपत्यमेकेषाम् ॥ १२ ॥

षष्ठी कण्डिका समाप्ता।

उपविश्य दक्षिणं जान्वाच्य ॥ ५ ॥

उपविश्य यजतिस्थाने दक्षिणं जान्वाच्य यजती-त्यनेन सम्बध्यते ॥

तृतीयेऽन्तर्द्धानं पुरस्तात् ॥ ११ ॥

अन्तर्द्धानं कटादिनेति कर्कादयः । अन्तर्द्धानकटः स-माचाराद्वारणोद्वादशांगुलोर्द्धचन्द्राकारइति देवः । वारणोर्थपरिमाणइति रामवाजपेयिनः ॥

शंय्वन्तं भवतीडान्तं वा ॥ १२ ॥

इडान्तं भवत्येव शंय्वन्तं भवेन्नवा । शंय्वन्ते क-र्त्तव्ये इडायुत्तरत उपविश्य, व्यवंहितेन शंय्वन्तमित्य-नेन वा शब्दस्य सम्बन्धः । प्रस्तरवत् मन्त्रवर्णादग्नि दैवतेति कर्कः । तूष्णीमित्यन्ये ॥ १२ ॥

शंय्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रु चि स्रुवे स्थाल्यां च ॥ १४ ॥

अग्रंजुह्वामनक्ति मध्यं स्रुवे बुध्नं स्थाल्यामिति श्रु-तेः । प्रास्य तृणादि पूर्ववत ॥ १४ ॥

शंय्वन्ते स्रुक् स्रुवं प्रगृह्णात्यग्ने दब्धा यविति ॥ १७ ॥

शय्वन्तइत्यन्ते सम्प्रदायमते सूत्र स्रुक्स्रुवमित्युक्तेः ॥ १७ ॥

उलूखल मुसले यच्च शूर्प आशिश्लेष दृष-दि यत् कपाले उत्प्रुषो विप्रषः सत्याः सन्तु

---

१ यतः शतपथे नियमेन श्रूयते तदिडान्तं भवतीत्यादिना (१.९.२.४.)

यजमानस्य कामाः स्वाहेति पिष्टलेपा

जुहोति ॥ १८ ॥

१ पिष्टलेपाहुतेरधिकारो दक्षिणाग्नावेवेति सर्वे । पितृभूतिस्त्वाहवनीयएवेत्याह ॥

पिष्टलेपानां होमइति कर्कादयः

आज्यहोमइत्यन्ये सकृद्गृहीतेन । चतुर्गृहीतं शाखान्तरादेवेति देवः ॥ १८ ॥

सप्तमी कण्डिका समाप्ता ।

स्तृणात्यात्रेदेः ॥ ३ ॥

त; होतावेदेः स; स्तृणात्यावेदेः स्तृणातीति काण्वपाठाद्धोता ॥ ३ ॥

ध्रौव; समिष्टयजुर्जुहोति देवागातुविदइति ॥ ४ ॥

ध्रौवस्य जुह्वोपविश्य होमइति कर्कः । तिष्ठन् ध्रुवैवेति गर्गादयः ॥ ४ ॥

वेद्यां प्रणीता निनयति परीत्य कस्त्वेति ॥ ६

आह्वनीयं परीत्येति कर्काशयः । दक्षिणतोबाहिर्वे-

---

१ अत्र वैतान सूत्रे पिष्टलेपहोमानन्तरं पठ्यते आग्नीध्रः संमार्गमग्नौ प्रहरतीति । संमार्गमिध्मसन्नहनम् अग्नौ आहवनीये ॥

२ आङत्रमर्य्यादायामिति देवः

आङत्राभिविधौ वेदिमिभव्याप्येति हरिस्वामिनः(शत. १.९.२.२४) एवमेव महादेवोपि ॥

२ तत्र ग्रहणं प्रधानं निनयनं तदर्थम् तेन प्रोषिते यजमाने, यत्र यजमानस्तत्रैव पूर्णमात्रस्य निनयनं केनाचित् कारणीयम् यजमानेनाञ्जलिना प्रतिग्रहश्चकार्य इति देवः ॥

षुपविश्य निनयति प्रणीता इति हरिस्वाम्याशयः ॥६॥

पूर्णपात्रं निनयति परीत्य सन्ततं यजमानो-
ञ्जलिना प्रति गृह्णाति संवर्चसेति ॥ ८ ॥

आहवनीयं परीत्य पूर्णपात्रं निनयति । प्रदक्षिणंश्रौतम् ॥ अतस्तदपचारे श्रौतं प्रायश्चित्तम् ॥ सशाखाग्रहे तद्ग्रहहोमे च वाग्यत इति पितृभूतेः कर्कस्य श्रीअनन्तस्यमते च ॥ १० ॥ (४)

गच्छति प्राङुरुविष्णविति ॥ २४ ॥
ततोसि तन्तुरस्यनुमा तनुह्यस्मिन्यज्ञे ऽस्या१
साधुकृत्यायामस्मिन्नन्ने ऽस्मिँल्लोक इदं मे
कर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्विति पुत्रस्य
नाम गृह्णाति ॥ २५ ॥

उरुविष्णविति ततोसीत्यारभ्यास्मिंल्लोकइत्यन्तेन च प्राङ्गच्छति । इदं मइत्यादिपुत्रनामग्रहणे भर्तृयज्ञः । देवास्तु ततोसीति पुत्रनामग्रहणमाहुः ॥

अथ प्राङुदाय पुत्रस्य नाम गृह्णातीदं मे कर्मेदमिति काण्वे ॥

अथ पुत्रस्य नाम गृह्णातीदं मेऽयं वीर्यं पुत्रोनुसन्तनोत्विति माध्यन्दिने ॥ २४ ॥ २५ ॥

अष्टमी कण्डिका समाप्ता ।

---

१ आसने प्राङ्मुखो गच्छतीति महादेवः ।

इति कात्यायनश्रौत सूत्रभाष्य (सार) सङ्ग्रहे सर्व याज्ञिकमतविचारे तृतीयोऽध्यायः समाप्तः ॥

उल्मुकसकृदाच्छिन्नान्यग्नौ ॥ २१ ॥

पूर्वं सकृदाच्छिन्नप्रासनं पश्चादुल्मुकस्य कुतः अग्नौ सकृदाच्छिनान्यभ्यादधाति पुनरुल्मुकमपि सृजतीति श्रुतेः ( शत. २. ४. २. २. ४. ) ॥ २१ ॥

उद्वास्यातनक्तिप्राग्घुतशेषेणेन्द्रस्य त्वेति ॥ २२ ॥

प्रातर्हुतशेषेणेति सम्प्रदायः । सायं होमशेषेणेति कर्क देवौ । सायं प्रातर्होमशेषणेति श्रीअनन्तः ॥

स्थालीस्थोहुतशेषः स्यात् स्रुच्येवेति च संशये ॥ स्रुक्स्थमेवेति युक्तं स्याद्धुतेन हविशेषणात् ॥ १ ॥

गृहीतं यत्तु होमार्थं यस्य शेषोस्रुखास्थितः । यतोवत्तस्य शेषोयं हुते सत्यवशिष्यते ॥ २ ॥

स्रुच्यतश्चुतशेषः स्यान्नतु भक्षोस्यविद्यते ॥ हविः शेषविधानेन चतुर्द्धाकरणं तथा ॥ ३ ॥

बाध्यते तद्वदत्रापि भक्षबाधोविधानतः । स्रुचस्त्वहुतशेषेण ततआतञ्चनं भवेत् ॥ ४ ॥

उच्यते त्वेकदेशस्य शेषोयं सकलस्यच ॥ न या[1]वद्धुतं सर्वतस्य शेषोत्र गृह्यते ॥

दक्षिणेग्नौ हुतेतस्या तृस्थालीस्थं नतु यत्स्रु-

१ नयावद्धुतस्य सर्वस्य

र्चि ॥ इतिसर्वयाज्ञिकानां मतविचारो यजुः शाखीयः समाप्तः ॥

इति कात्यायनश्रौतसूत्र भाष्य ( सार ) सङ्ग्रहश्चतुर्वेदोपाह्व श्यामनारायणशर्मणा सूत्रोपन्यासादिनोपबृंहितः टिप्पराया समलङ्कृतः समाप्तः ।

---

१ शाखान्तरेचोपवसथस्य पुरस्ता देकाहे द्व्यहे वातञ्चनस्योपकल्पनम । अग्निहोत्रोच्छेषेण दध्नातनक्तीति ।

मानवेतु तद्दिने सायं हुतावशिष्टयवाग्वाः पिण्डमवदधातीति । आपस्तम्बस्त्वेवमाह एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे ऽत्र्यहे वा पुरस्तादुपवसथादातञ्चनार्थे दोहयित्वा सन्ततमभिदुहन्त्युपवसथात् ( प. १ कं १३ सू. १२ ) तेनेशीतबुध्नमातनक्ति । ( १. ११. १३. ) ( शीतमनुष्णां कुम्भीपृष्ठं यस्य तच्छीतबुध्नमिति रुद्रः ) अत एव चतुर्दश्यां रात्रौ दध्नाग्निहोत्र होमः कार्य इति प्रतीयते । हुतशेषश्च स्थालीस्थोमाह्योन स्रुग्गतइति ।